॥ श्रीश्रीगौरहरिर्जयति ॥

गौडीयग्रन्थगौरव:—

प्रकाशतग्रंथसंख्या—११७—१२०

# )भक्तितत्वप्रकाशिका(२)गीतिविंशतिका·

विवेक(४)अनर्पितचरीचिरादितिश्लोकस्य व्याख्या

क्रमत:—

रचयिता:—

१)श्रीचैतन्यदासजी(२)गोस्वामिश्रीगोपीलालजी

३)श्रीश्रीनारायणभट्टजी(४)श्रीपादजीवगोस्वामीजी

—२०२०

— ॥)

प्रकाशक: व मुद्रक:—
कृष्णदासबाबा

गौरहरिप्रेस, कुसुमसरोवर

# ❀ भक्तितत्त्वप्रकाशिका ❀

स्वादाय निरवद्यायरते योऽस्मिन्नुद्देश्यवान् ।
तदाधारतया तं श्रीकृष्णचैतन्यमाश्रये ॥१॥
तत्कृपाप्तेन केनापि गोविन्दप्रेरितात्मना ।
गुह्यं विशुद्धं दुर्बोधं भक्तितत्वं प्रकाश्यते ॥२॥

नाम्नाभासस्यापि श्रद्धा-भक्तिज्ञानवैराग्याभ्यास--देशकाला-
दिविशेषनैरपेक्ष्येण सकृदुच्चारमात्रेण महापातकादिसर्वपाप-
पूर्वकमोक्षसाधकतया श्रीनाम्नो निरर्गलप्रभावमाह यमः—

"एतावतालमघनिर्हरणाय पुंसां
संकीर्त्तनं भगवतो गुणकर्मनाम्नाम् ॥
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि
नारायणेति म्रियमाण इयायमुक्तिम्" ॥

भगवतो गुणानां कर्मणां नाम्नां च रुपाणामपि ज्ञेयं । सम्य-
र्त्तनमितियत, एतावता पुंसामघनिर्हरणाय पापक्षयमात्राय
मुपयोगो नास्ति अलं शब्दोऽत्र वारणे । पापक्षयस्यातितुच्छ-
त् । भगवत्कीर्त्तनस्यातिगरीयस्त्वात् । उपयोगाभावमेवाह,
जामिलोऽपि आमरणाभ्यस्तपापोऽपि नारायणेति विक्रुश्य
सम्यक्कीर्त्तयित्वा तच्च स्नेहवशेन पुत्रं विक्रुश्य न तु हरिं ।
वानशुचिरपि म्रियमाणो मरणदुःखविवशोऽपि नतु सुस्थचित्तः
मियाय । समस्तार्थनिवृत्तिपूर्वकपुत्रस्नेहमयनिरतिशयभगव-
अवाप। तस्य समस्तपापानलस्य निवृत्तिरभूत्।मुक्तो वभूव इत्य-
अपितु मुक्त्यनन्तरं भगवत्पार्श्ववर्त्तिदेहवान् सन् तस्य पार्षदैः सह
नमारुह्य वैकुण्ठमवाप तत्रापि नैतिह्यमात्रं अपितु अधुनैवो-
तेति सांगुलिनिर्देशमभिधीयते धर्मराजेन तद्गमनस्य

सन्निधितया वर्त्तमानत्वात् पूतनाया जिघांसयापि तथानुकरणे अवाप जननीगतिमित्युक्तेः उक्तलक्षणायामुक्तं खलु हि येन अनन्यवेद्यत्वेऽपि भगवल्लोकप्राप्तिलक्षणमुक्तिपर्य्यन्तं विवक्षितार्थलाभः ततश्च संसारमहीरुहमेव समूलं गिलतो भगवन्नामग्रहणमहादावदहनस्य मनाक् स्पर्शाभासमात्रेण जननमरणमध्यवर्त्तिसर्वसुकृतनाशकमहापापपटलीतूलराशिदाहे श्रद्धाभक्ति-आभास-ज्ञानकालदेशाद्यपेक्षासंभावनापि न युज्यते। अतो नामाभासेनापि सर्वपापक्षयपूर्वकमोक्षगमनमित्येव तत्वं। आवृत्तिश्रद्धादिविधयस्तु महदपराधावलम्बनस्थितपापवासनाक्षयार्थाः। तथैव विष्णुदूता ऊचुः। यदा नारायणेति जगाद चतुरक्षरं आ ईषत् आभाषमात्रं चतुरक्षरं जगाद चतुरक्षरमित्यनेनाधिक्यं दर्शितं। तत्रापि नारायण आय आगच्छ इत्येवं विक्रोशरूपेण पुत्राह्वानेन ततो जीवेश्वरयोरनादिकालव्यापारितस्वाभाविकपाल्यपालकादि - सम्बन्धमाविर्भावद्वारा तौ परस्परमवधाप्य संयोजयितुमुद्युक्तं भवति भगवन्नाम इत्याहुः "नाम व्याहरणं विष्णोर्यतस्तद्विषया मतिः" यतो नाम व्याहरणात् तद्विषया नामोच्चारकपुरुषविषया मदीयोऽयं मां विस्मृत्यानादिकालाध्यात्मादिदुःखपीडितो जन्ममरणादिप्रवाहपतितः क्लिश्यति, अतो मया सर्वतो रक्षणीय इति विष्णोर्मतिर्भवति। एवं विष्णोरवधानं प्रतिपाद्य जीवावधानं प्रतिपादयति। यथा हरेर्नामपदै रुदाहृतैस्तदुत्तमश्लोकगुणोपलम्भकं। उदाहृतैरुच्चारितै र्यथा नामपदैरित्यनेन न मामित्यादि क्रियायोगोऽपि नापेक्षित इति दर्शितं।

किञ्च तन्नामपदोच्चारणं उत्तमश्लोकस्य गुणानां परमदयापरमकरुणादिगुणानां उपलम्भकं ज्ञापकं भवति। अनेन गुणप्रवर्त्तितावृत्त्या उत्तराघानुपश्लेषात् सवासनप्रारब्धध्वंसेन भगवत्प्राप्तिरेवाभिप्रेता। एतदेव विशदयन्ति। गुणानुवादः खलु सत्व-भावनः। यतोऽसौ सत्वभावनः चित्तशोधकः, आदिद्यकव्रतादिकर्मणामस-

द्वासनाबीजतया भगवत्स्वरूपस्पर्शाभावेन चित्ते वैमुख्यमालिन्यापादकत्वं हरेर्गुणानां भगवत्स्वरूपप्रकाशकतया कीर्त्तनारम्भमात्रेण तद्गुणाननुभाव्य तत्सान्मुख्यापादनेन परमशोधकत्वं रजस्तमोभ्यां कलितं ततोऽन्यथेति व्यतिरेकात्। तदपीशांघ्रिसेवयत्येत्वयाश्च। एतदेव यमदूतान्प्रति विष्णुदूता ऊचुः —

अयं हि कृतनिर्वेशो जन्मकोट्यंघसामपि।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः॥

यद्यस्माद्विवशोऽपि हरेर्नाम व्याजहार उच्चारितवान्। विवशस्य तु न श्रद्धादयः संभवन्ति न केवलं प्रायश्चित्तमात्रं हरेर्नाम अपि तु स्वस्त्ययनं मोक्षसाधनमपि।

"सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्।
बद्धः परिकरस्तेन मोक्षाय गमनं प्रतीति" स्मृतेः॥

तथाहि। अयमजामिलो यद्यदा पुत्रनामकरणसमये हरेर्नाम सकृद्व्याजहार तदेव जन्मकोट्यंघसां कृतनिर्वेशः सन्मोक्षगमनाय बद्धपरिकरो भूत्वा अनन्तरं पुत्रलालनकृतपुत्रोपचारितद्वितीयोच्चारणया वृत्त्या वासनाक्षये मुक्तो बभूव। परिकरबंधश्चात्र प्रक्षीणपापत्वमेव। तत्खलु प्रथमसोपानमपवर्गप्रासादारोहणस्य कर्मात्मकं प्रायश्चित्तं नात्यन्तिकमित्याद्यप्रायश्चित्तं विमर्शनमित्यत्र पथ्यमेवान्नमश्नन्तं न व्याधयोऽभिभवन्त्युतेति दृष्टान्तेन तस्यापि सापेक्षतां संभाव्य "केचित्केवलया भक्त्या वासुदेवपरायणाः। अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः।" केवलया तप आदिनिरपेक्षया, यथा भास्करः स्वभावतः प्रकाशितेन केवलेन स्वरश्मिना नीहारं निरस्यति न तु तदर्थप्रयत्नतः। कार्त्स्न्येनेत्यनेन तदस्पृष्टोऽपि स तत्प्रतापतः स्वयमेव नश्यतीत्युक्तं तथैवैतद्भक्त्येति। अनेन श्रवणादीनां सर्वासां समानप्रभाव इति निश्चितं। वासुदेवपरायणा इति नाधिकारिविशेषणमेतत्। किन्तु अन्येषां अश्रद्धया

तत्राप्रवृत्तेरर्थान्तेष्वेव पर्य्यवसानादनुवादमात्रं इत्युपक्रम्य—

तस्मात्संकीर्त्तनं विष्णोर्जगन्मंगलमंघसां ।
महतामपि कौरव्य विद्ध्येकांतिकनिष्कृतिं ॥
नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥

इत्युपसंहारेऽपि हरिभक्तेरन्यनिरपेक्षप्रायश्चित्ततामापाततः-प्रदर्श्य इतिहासे ब्रह्म.विप्रा समानस्कन्धतया सकृन्नामाभासोच्चार-मात्रस्यापि पापक्षयपूर्वकमुक्तिसाधनत्वं निर्णीतं । अयएव नार-सिंहेऽपि नारकाणां कृष्णेत्युच्चारमात्रेण वैकुण्ठगमनमुक्तं । किंच-

तदेव सिद्धपरिगीतपवित्रगाथा
ये साधवः समदृशो भगवत्प्रपन्नाः ।
तान्नोपसीदत हरेर्गदयाभिगुप्ता
न्नैषां वयं न च वयः प्रभवाम दण्डे ॥

इति वाहिमुख्यप्रवणपुण्यपापानां समदृक्तयानुपयोग्ययमादीन दूरतः परिहृत्य भगवन्प्रपन्नमात्राणां देवसिद्धादिस्वगणयावमतया शिरोधार्य्याणां दण्डे सर्वं गिलः कालोऽपि चेन्न प्रभवति तदा वयं के तस्मान्नुय हरेर्गदया रक्षित तत्समीपस्थानपातकिनोऽपि नप्यात यतः ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात्पातकं तदपि हन्त्युरु-गायवादः । इत्यनूद्य जिह्वा न बक्ति हरेर्गुणनामधेयानित्यादिनैक दाप्यकृतकीर्त्तनादि भर्त्कनामानयनमुपदिष्टं । ननु किं समस्ता-नामेव भगवन्नाम्नामेतादृशं सामर्थ्यं उत व्यस्तानां । न तावत्सम-स्तानामेव । अवशेनेत्यादि विधिना विरोधात् । नह्यवशस्य समस्ता-नामुच्चारणं संभवति । अथ व्यस्तानां शुद्धं वाशुद्धवर्णं व्यवहित-रहितं तारयत्येव सत्यमित्युक्तेः, जगादचतुरक्षरमित्युक्तेश्च । ननु सर्वेषामेव उत्कर्षं केषाञ्चित वा ? यद्यपि सर्वेषां समानमहिम्नामपि नाम्नां सहस्रनाम तत्तुल्य रामनाम वरानने । श्रीरामनाम्नो नाम-

सहस्रसाम्याभिधानात्स्वरूपसाम्येऽपि प्रकाशरहस्यभेदेन गरिम-लघिमतारतम्यं भवत्येव, उपाध्यवच्छिन्नप्रकाशेषु दीपादिषु एकस्मिन् दीपे दीपसहस्रस्य यावान्प्रकाशस्तावन्न संभवति। न पुनरवच्छिन्ननिरकुंशाचिन्त्यमहिमस्तु भगवन्नामसु।" अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्। प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्"। तर्काप्रतिष्टानादित्युक्तेः। एवं स्वरूपप्रकाशतारतम्येन सर्वेषामपि भगवन्नाम्नां प्रत्येकमेतादृशसामर्थेनाप्युत्तरोत्तरभूमिका-भेदेन वैशिष्टयं तत्वदर्शिभिर्निर्णीतमत्र। यथा "सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलं। एकावृत्त्या तु कृष्णस्य नामैकं संप्रयच्छति"। तथहि–कृषति विलिखति विदारयति आमरणाभ्यस्तमहापराधानां पूतनादीनां स्वसान्निध्यमात्रेण स्थावरजंगमादीनामपि संसाराटवीमिति तथा। आकर्षति स्वनामरूपगुणलीलाभिराकृष्यात्मसात्करोति च एवं सर्वानानंदयतीति कृष्णः परमात्मा परमानन्दरूपः।

"कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः।
तयोरैक्यं परंब्रह्म कृष्ण इत्यभिधीयते"॥

इतिस्मृतेः। तस्य चायमर्थः। भवन्त्यस्मान्सर्वेऽर्था इतिभूः भूधात्वर्थ उच्यते भावशब्दवत्। सचात्र कर्षतेरर्थः, तद्वाचकः आकर्षवाचकः निर्वृतिरानन्दस्तद्वाचको णश्च। तयोरैक्यं सामानाधिकरण्येन व्यक्तं यत्परं ब्रह्म सर्वतोऽपि बृहत्तमं सर्वव्यापि च बृंहनं वस्तु तत्कृष्ण इत्यभिधीयते।

बृहत्वाद्बृंहनत्वाच्च तद्ब्रह्म परमं विदुरिति विष्णुपुराणात्, बृंहति बृंहयतीति श्रुतेः। तदेवं स्वरूपगुणरूपाभ्यां परममहत्तमः सर्वाकर्षकः आनन्दः कृष्णशब्दवाच्यः।

तस्य च तमालश्यामलत्विषि यशोदास्तनन्धये ब्रह्मणि रूढिः रूढिर्योगमपहरतीति न्यायात्। यौगिकार्थोऽपि अति-विषमरोषावेशविस्फू

खलसकलकरणवृत्तीनां पूतनाप्रभृतीनामपि मोक्षातिशायि-वात्सल्यादिभक्तिरसान्सारूप्यादिमुक्तिश्च वितरतः तथा स्वनित्य-निरस्तनीहारतया निरन्तरं स्वमहिमसमुल्लसदानन्दात्मनः श्री-गोपालशिरोमणेः सर्वप्रकारोऽपि योगोस्त्येवेति तस्यैव ग्रहणं निर्गुणस्य ब्रह्मणः प्रयोगप्राचुर्यात्तत्रैव प्रथमप्रतीतेरुदयात्।

"वदन्ति तत्तत्वविदस्तत्वं यज्ज्ञानमद्वयं।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते।"

अद्वयं स्वयं सिद्धतादृशातादृशतत्वांतराभावात्स्वशक्त्यैकाश्रयतया परमाश्रयं, यज्ज्ञानं चिदेकरूपं तत्वविदस्तत्तत्वतदुपासनाप्ततत्तद्योग्यतया ईदृग्वैशिष्ट्यानुभूतिनिपुनाः तत्तत्वं परमपुरुषार्थतया परमसुखरूपं वदन्ति, तदेवतत्वं "ये यथा मां प्रपद्यन्ते तां तथैव भजाम्यह" मित्युक्त्या तत्तदुपासनानुरूपप्रकटितनिजसत्ताविशेषतया निरूपयंति, तदेकमेवाखण्डानन्दस्वरूपतत्वं सत्यामपि तदीयस्वरूपशक्तिवैचित्र्यां साधनवशात्तादात्म्यमापन्ने नामरूपगुणलीलादिवैचित्रीग्रहणासमर्थे चेतसि सामान्यतया प्रकाशमानं ब्रह्मेति शब्द्यते। अथ तदेवतत्वं स्वरूपभूतयैव शक्त्या कमपि विशेषं धर्तु, तदनुभवानन्दसन्दोहान्तर्भावितताद्दशब्रह्मानन्दानां हैरण्यगर्भाणां तथा साधनवशात्तादात्म्यमापन्ने चेतसि नामरूपादिविशिष्टमप्यंशतया प्रकाशमानं परमात्मेति। 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्युक्तेः गीतायां भगवता। समाधिगतासमानोर्द्ध सुखान्तर्भाविताशेषेतरानन्दसन्दोहानां भागवतपरमहंसानां तथानुभवैकसाधकसाधकतमतदीयस्वरूपानन्दशक्तिविशेषात्मकभक्तिभाविवेष्वन्तर्बहिरिन्द्रियेषु संपूर्णाविर्भावितसर्वशक्त्या प्रकाशमानं सर्वासां शक्तीनां मूलाश्रयरूपं भगवानिति। भगवत्तामेव विशदयति श्रीसूतः। "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमित्युक्तेः।" "अतोऽस्मिल्लोके वेदे च प्रथितः पुरुषोत्तमः" इत्यत्र च।

"सिद्धान्ततस्त्वभेदेऽपि श्रीशकृष्णस्वरूपयोः ।
रसेनोत्कृष्यते कृष्णरूपमेषा रसस्थितिः ॥"

इतिन्यायात् । इत्थमेवेतरगोपीगणमहिषीगणश्रीभूलीलादयः श्रीराधिकायाः अंशाः । दुर्गाद्या कला विभूतयः । सर्वलक्ष्मीमयीत्वेन तस्या एवाभिधानात् । "देवत्वे देवदेहेयं मानुषत्वे च मानुषी । विष्णोर्कार्य्यानुरूपा हि" इति विष्णुपुराणात् ।"तत्कलाकोटिकोटचंशा दुर्गाद्यास्त्रिगुणात्मिका" इति प्रामाण्याच्च । एवं समानमहिम्नामपि विभूत्यावेशशक्तिकलांशाद्युत्तरोत्तरभूमिकाप्रकाशभेदेन निर्णीततारतम्ये को वा शंकावकाशः । एवमेव श्रीराधानाम्नोऽपि वैशिष्टय' सिद्धमेव । किं च

"मधुरमधुरमतेन्मङ्गलं मङ्गलानां
सकलनिगमवल्ली सत्फलं चित्स्वरूपम् ।
सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर ! नरमात्रं तारयेत् कृष्ण नाम ॥"

मधुरेभ्यः प्रेमभक्तिदातृभ्यो भगवन्नामेभ्योऽपि मधुरं मधुररसरूपतया प्रसिद्ध-पारकाल्यपरममधुरं । मंगलानां मोक्षदातृश्रीरामादितारकमन्त्राणां मंगलं पूतनादिभ्यो धात्र्यादिगतिदातृतया परममङ्गलरूपमिति । स्वाम्यनुगतनामकौमुदीकृदप्येतत्प्रकरणोपक्रमे इदमेवाभिप्रेत्याह । "यस्य नामान्यधीयानैः शुकैरपि शुकायितं । विनयैर्बल्लभस्त्रीणां स कृष्णः कुरुतात् कृपामिति ।" अस्यार्थः–स कृष्णः श्रीनन्दादिसहितो गोकुले निवसन्सन्यशोदास्तनन्धयतया प्रसिद्धः गोपालशिरोमणिः कृपां कुरुतात् । यत्सम्बन्धगन्धेनानेकसाधारणजनास्तंत्रात्सारूप्यमापुः तैर्ब्रह्मोद्धवादिकामितसौभाग्यैः पशुपक्षिसरिसृपतरुगुल्मलतातृणवीरुधौषधिभिरलंकृते श्रीवृन्दावने निजस्वरूपभूताभिः प्रेम्नः परावधिकक्षारोहणेनाभिभूतलक्ष्मीप्रभृतिसौभाग्याभिर्निरन्तरं यानि बिहाराणि कुर्वन्वि-

राजते तेषां कीर्त्तनस्मरणादिरूपां कृपां मयि कुरुतादित्यर्थः। कीदृशः प्रथमं स्वसुखनिभृतचेतस्तया अननुभूतानि पित्रापुत्रस्नेह-प्रकाशितरहस्यानि यस्य नामानि अधीयानैः पित्रोच्चारणमनूच्चा-रणमात्रेण शुकैरात्मारामतया प्रसिद्धैः शुकायितं शुको यथाम्रादि-मधुरपरिपक्वफलरसास्वादलोलुपतया तत्तद्वृक्षमवलम्बते तथा तेनापि रसिकजनप्रियतया तदन्वेषणाय तत्र तत्र बिचरता तथा चरितं 'नित्यं विष्णुजनप्रियः' 'अजितरुचिरलीला कृष्णसारः' 'हरे-गुणाक्षिप्तमतिरित्याद्युक्तेः।' तत्र हेतुगर्भविशेषमाह बल्लव-स्त्रीणां विनयैः तासां शिक्षितैः पितुः पठितश्रीमद्भागवतलब्धो-द्धवादिस्तुततन्महिमज्ञानेन तदनुगत्येव तदारूढप्रेमपरावधिक-क्षावगतौ कदाचित् कश्चिदधिकृतो भवेदिति निश्चिन्यता गुरु-तयाश्रितैरित्यर्थः। बहुवचनं सजातीयाभिप्रायेण। तत्संप्रदायानुरो-धेन च अत्र स्वामिनामकौमुदीकृतोरयमभिप्रायः अजामिलस्य प्राचीनजन्मनि अस्मिन्वा श्रीशुकदेवादिषु रजः प्रक्षेपादिवन्महदव-मानातिरिक्ताप्रारब्धप्राचीनाघः संघस्य अपराधकृतमहत्संग-प्रभावस्फुरितभगवन्नाम्नः पुत्र-नामकरणसमये प्रथमोच्चारमात्रेण क्षयः। भवितव्यं मङ्गलेनेत्युक्तेः। तत्र पुत्रोपचाराभासितनाम्नो द्वितीयोच्चाराद्यावृत्तिः महदपराधादव्यवलम्बेन तिष्ठति या पाप-वासना तया जायमानानि यानि नामोच्चारानन्तरपापानि नामा-पराधरूपाणि,'नामापराधयुक्तानां नामान्येव हरन्त्यघमि'त्याद्युक्त्या तस्यास्तेषां च बिध्वंसद्वारेणापवर्गसाधिका प्रारब्धनिवर्त्तिका च जाता। ततो भगवन्निकटगमनोपयोगिमरणसमयनामोच्चारणं तेनाकारितपार्षदैर्मदीयोऽयं मया सर्वतो रक्षणीय इति भगवत्प्रति ज्ञातार्थसाधकैर्मृत्युपाशान्मोक्ष । ततः शुद्धवत्सलभक्त्या वैकुण्ठ-गमनम्।

म्रियमाणो हरेर्नाम गृणन् पुत्रोपचारितम्।
अजामिलोऽप्यगाद्धाम किमुत श्रद्धया गृणन्॥

इत्युक्तेः फलं द्वैधमुक्तं। एकतः साधनवलेन। अन्यतः केवल-प्रभावेन। तत्र साधनस्य सन्मार्गतया तदाचरितसत्संगसन्नेवादिविधीनां असत्संगमहदपराधादिनिषेधानां सापेक्ष्यत्वं वैतानाग्नेरिवास्त्येव। प्रभावस्य निरर्गलतया दावानलवदचिन्त्यकृतित्वं। अजामिलमूषिकादिषु तथा दृष्टेः। यथा स्वरछन्दादिविशिष्टे नामात्मकेऽपि मन्त्रे विधिनिषेधौ ऋषिभिः प्रयुक्तौ तथा तनु केवले नाम्नि। नम आदिशब्दानपेक्ष्यत्वात्। अतएव "गुह्यं विशुद्धं दुर्वोधं यज्ज्ञात्वामृतमश्नुते।" इत्यनेन यद्ज्ञानमात्रेणामृतभोगो जीवन्मुक्तिता श्रीधर्मराजेन निर्णीता। तत्प्रवृत्तानां मुक्तौ केन वा पामरेण शंका संभाव्यतां प्राक्तनाधुनिक महदपराधरहितानां निर्वेद-प्रवर्त्तिनां गुरुच्चरितनामश्रवणमात्रेण सबासनपूर्वाशेषादघापगमात श्रद्धा-रुचिपूर्वकं स्वयमुच्चरितं नाम भक्तिविरक्तिभगवत्प्रबोधान्युग पदङ्कुरयति। ततो मुच्यमानानां द्वितीयाद्युच्चारक्रमेण प्रतिबन्धकनिरसनक्रमेण भगवत्सान्निध्यप्रयानमेव स्यात्। स्वापराधानां कृपया गुरुच्चारिते नाम्नि पित्तदूषितजिह्वानां खण्ड इव रुचिर्नोत्पद्यते, कुतो भक्तिविरक्त्यादयः। किन्तु आवृत्त्या तदपगमे ते आविर्भवन्ति चिरात्। गुरूपदेशानन्तरकृतापराधानां भोगेनैव क्षयः,महत्कृपया वा। तत्रापि महापराधे भक्तिर्न्यूनकक्षामवतरति किंवा ज्ञाने पर्य्यवसति। महदपराधस्य भक्तिप्रतिबन्धकत्वात्। श्रीभरतदेवस्य महदवमानाद्यभावेऽपि यदावर्त्तिते कीर्त्तनादि समुत्पन्नपरोक्षानुभवपर्य्यंतोपासनातिरोधानादुत्तरकालभाविना मृगासक्तिरूपेण कर्मणा निकृष्टदेहारम्भः तत्खलु जीवानुग्रहकाम्यया यथा स्वयमवतरति स्वजनानवातारयति। तथा तत्संगेन रहूगणाद्यनेकजीवानां स्वोन्मुखीकरणाय मुचकुन्दवत्स्वसान्निध्यस्य शीघ्रानयनेनैच्छद्भगवान्। तदिच्छानुसारिणी भक्तिरपि तदुत्कण्ठावृद्धै तत्प्रारब्धकर्मादिनिवृत्त्यै न प्रयतितवती। तदर्थमेव श्रीप्रह्लादादिभ्योऽनिच्छद्भ्योऽपि अनभीष्टाधिकारवितरणं। इतरेषां आर्त्तिजिज्ञासा-

र्थार्थव्यापारातुराणां भक्तिविरोधिशुभाशुभापकरणे सदोद्युक्तो-भवति। बलेः प्रथमं स्वभक्तिविरोधित्रैलोक्यैश्वर्य्यं श्री प्रह्लाद-सम्बन्धेन याच्ञा छलेनापहृत्य पुनर्भक्त्युपयोगिस्वसेवौपयिकं सुत-लैश्वर्य्यं वितीर्य्य पुनस्तत्प्रतिश्रुतौ पूर्वापरावस्थाविचारप्रतीतेः। अतो भरतस्य महदवमानाद्यभावात् मृगत्वमप्येतज्जातिस्मरणो-वैराग्यदयादिगुणमुद्दहद्भक्त्यनुकूलमेवाभूत्। न प्रतिबन्धकं इंद्र-द्युम्नस्य महद् व्यवमानप्राप्तगजेन्द्रत्वं भगवत्स्मरणमपि प्रति-बध्य भोगापसान एव भक्त्युद्बोधकमभूत्। देवलापराधप्राप्त-ग्राहदेहस्य हुन्हगंधर्वस्य तदपराधारम्भितेन गजेन्द्रे महापराधा सादितसंगतो भगवद्दर्शनस्पर्शनादिकं यद्भूत्तत्खलु महत्संगस्याचि-न्त्यतामेव व्यनक्ति। जयविजययोर्ब्रह्मविदवमाने भगवानात्मकृत मननेन तदुपशमे स्वयमेव प्रवृत्तः। न प्रार्थितेनापि दुर्वाससो भक्ता-पराधे तत्प्रसादैकसाध्यात्। निजावमानिनां शिशुपालादीनां नार-दादिसत्संगकृतसांमुख्यमात्रावलोकात्सर्वशुभंकरणव्रती द्वेष भया-द्यावेशकृतस्वकीर्त्तनस्मरणादिप्रभाव दग्धनिन्दादिदोषाणां स्वा-भाविककृपया मुक्तिसुखायैव प्रयतते। तेषामन्यथासाध्यत्वात् सत्सं-गेन हि दैतेया यातुधाना इत्याद्युक्तेः ज्ञानलवदुर्वलास्तु स्वविज्ञं मन्य-तया महत्स्वसूयामत्सरादिदूषिता दुश्चिकित्सा कृपया कृतमहदनु-ग्रहेन श्रद्धते। तेषु वस्तुशक्तिरपि आर्द्रेन्धनादौ वन्हिशक्तिवच्छीघ्रं न प्रभावमाविः करोति। इतरेषां महद्दर्शनमेव नास्ति। अथो न पश्यन्त्युरुगायनूनमित्याद्युक्तेः। अतो नादितस्तेषु निर्हेतुककृपया स्वयं शास्त्रगुर्वादिप्रवर्त्तके कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थे परम-दयालौ अन्तर्वहिर्विराजमानेऽपि सद्विमुखानां न संसारदुःखशान्तिः भगवतः कृपा विशेषाभावात्। अत्र कारिका—

आब्रह्मस्तम्भपर्य्यन्तजीवेषु भगवत्कृपा।
निर्हेतुकी स्वरूपेण सत्संगहैतुकीतरा।
बुद्धीन्द्रियमनः प्राणान्जनानामसृजत्प्रभुः॥

"सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिरित्यादयुक्तेः। भगवतः कृपाविशेषस्तु जीवदुःखस्य चेतसि स्पर्शे सत्येव जायते। सच सदा परमानन्दैकरसत्वेन निःकल्मषे तस्मिन् स एवात्र सरणमित्यादिभक्तिसम्बन्धेन विना तेजो मालिनि तिमिरवन्न संभवत्येव। चिरकालदुःखितस्य गजेन्द्रस्य भक्त्यूदयमात्रेणोत्तरलता दृष्टेः। अतः सत्कृपा स्वातंत्र्येणैव प्रवर्त्तते। नतु भगवत्कृपा निदानतयाऽपि यतो भगवत्कृपा विशेषस्य तद्विमुखेषु तदनन्तरमेव प्रवृत्तिः। जायमानं हि पुरुषं पश्येद्यं मधुसूदन इत्यादि सत्संगानन्तरजन्मपरं। "सत्संगादिगुणोपेतमाचार्य्यं प्रेर्य्यचेतनं। प्रपन्नं विद्धातीति पूर्वाचार्य्यविनिर्णयात्।" तथापि भक्तैर्दैन्यस्वाभाव्येन तस्मिन्नेव पर्य्यवशाप्यते। किं वर्णये तव विभो यदुदीरितोसुः संस्पन्दते तमनुवाङ्मन इन्द्रियानीत्युक्तेः। भक्ते विषयएव भगवान्नाधारः यथा गौद्वारैव दुग्धमवतरति भोक्ता चेद्दीयते तर्हि तदाप्तमेव। तथा या भक्तिनिदाना तत्कृपा सत्सु वर्त्तते सा सत्संगद्वारेणैव जीवान्तरे संक्रमते, न स्वतंत्रा 'तानहं तेऽभिधास्यामि देवव्रत मुखच्छुतानिति' श्रीमुखोक्तेः। भगवान्भक्तभक्तिमानिति यदुक्तं तद्धि जानन्ति तद्विदः। अन्यैस्तन्निर्वक्तुं न शक्यते। ततः सत्संगहेतुश्च सतां स्वैरितैव न पूर्वसंस्कारपुण्यादयः। त एकदा निमेः सत्रमुपाजग्मुर्यदृच्छया। यदृच्छा स्वैरितेत्यमरः। स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवया। वाणिज्यसेवादिप्राप्तपुण्यतीर्थनिषेवणाद्धेतो निवासतो यद्द्रव्याहरणादिकार्य्यार्थं भ्रमतो प्रायस्तत्र रमानादच्यर्थं भ्रमता कीर्त्तनादिकुर्वतां वा महतां कार्य्यार्थं कौतुकेन वा या सेवा दर्शनसंभाषणादिलक्षणा तया। तत्प्रभावेन तदीयाचरणे सुखबुद्ध्या स्वकृतौ दुःखानुसन्धानेन श्रद्धा भवति तदपि स्वाभाविककीर्त्तनादिश्रवणे च रुचिर्जायते। तथा येषां वृक्षादीनां पुष्पछायादिकमुपयुज्यते येषां गवादीनां दुग्धाकिमाह्रियते तेषामपि। इत्यादि यदृच्छासंसिद्धिः। अस्पृष्टसांसारिकदुःखा अपि जीवानुग्रहरूप भगव-

दिच्छया प्रापंचिके भ्रान्ति सांसारिकदुःखदर्शनात्तेषु तेषामेव कृपा भवति। सापराधेऽपि सा दयालुतयैव न स्वोपासनाद्यपेक्षया नेहायवामुत्र च कश्चनार्थमृते परानुग्रहमात्मशीलमित्युक्तेः। न केवलं गंगादीन्येव तीर्थानि। अपितु यत्र यत्र सन्तस्तिष्ठन्ति रमानाद्यर्थं सकृदप्यधितिष्टंति येषां गृहेषु भुञ्जते भिक्षाद्यर्थं वा प्रविशन्ति तानि तान्यपि। तीर्थी कुर्वं स्तदाश्रममित्युक्तेः भवद्भिस्तीर्थका कृता इति च। तथा श्रवणाभिधसवर्य्याः स्नानपानार्हकूपस्य श्रीरामकृतस्नानस्य श्रवणतीर्थं इति प्रसिद्धिः। यत्र यत्रार्चाबतारास्तानि तान्यपि एतेषु च निरपराधान्प्रति श्रद्धाभक्त्यादिकमनुवर्त्तते। सापराधेषु दुष्कर्मदुराचारदुःशीलादयः प्रवर्त्तन्ते। तथापि यथाकथञ्चिदेष्वागमनमात्रेण श्रेयः सिद्धत्येव। तथाहि बिना कृष्णप्रसादेन क्षणमेकं न तिष्टतीत्यादिबाराहबाक्येन मथुरायां क्षणमात्रबासोऽपि कृष्णप्रसादज इति श्रूयते। स च भक्तिनिदानतया प्रबर्त्तत इति निर्णीत एव। साच दुष्कर्मिदुराचारादीनामपि भक्तभगवद्द्वेषिणां म्लेच्छादीनामपि सत्संगसत्तीर्थाचिन्त्यप्रभाबतो भबत्येब "किरात हूणांध्रपुलिन्दपुक्कसा आभीरकङ्का यबनाः खसादयः येऽन्ये च" इत्युक्तेः। "दिनमेकं निबासेन हरौ भक्तिः प्रजायत" इतिपाद्मोक्तेश्च। तीर्थागमनसत्संगमतो भक्तिः, भक्त्या च मुक्तिः। अतो मथुरादर्शनस्पर्शनिवासादिना भक्तिर्जायते मुक्तिश्च। परानन्दमयीसिद्धिर्मथुरास्पर्शमात्रतः इत्युक्तेः। तथापि दुराचारदुःकर्म दुःशीलादि यद्दृश्यते तत्खलु प्रागुक्तमहदपराधालंवनस्थितदुर्बासनारब्धमेव। तदपि आमहत्संगभगबत् प्राप्ति मध्यवर्त्तिसुकृतदुष्कृतादि यत्किंचित्सर्वं तत्प्रभावेन स्वयमेबापक्षीयते नकर्मान्तरारम्भकं। "भर्जिताः क्वथिता धाना प्रायो बीजाय नेष्यते इत्युक्तेः। अतोऽत्र प्राप्तभूतादिदेहानां 'मथुरायां कृतं पापं मथुरायां बिनश्यतीति' तद्भोगाबसान एव मुक्तिर्निर्दिष्टा अतएव "नहि कल्याणकृत कश्चिद्दुर्गतिं तात गच्छति" "अपि चेत्सुदुराचारो

भजते योमामनन्यभाक्" इतिश्रीमुखोक्त्या तद्दोषदृष्टिरपराधतया निवारिता। किञ्च "या जन्मभोक्ष्णीव्रतमृत्युदाहैर्नृणां चतुर्धा विदधाति मोक्ष" मिति वाराहोक्त्या जन्मादिमात्रेण चतुर्विधाः सर्व एव मुक्ता भवन्ति। तथापि दुष्कर्मादि यत्तदपराधकृतमेवदैवप्रकृतीनामितिविवृतमेव। असुरप्रकृतीनां सत्सु सत्तीर्थेषु च सद्बुद्धि र्नोत्पद्यते। अतस्तत्प्रभावोऽपि तेषां स्वाभाविकदुर्वासनारब्धदुष्कर्मादिनिरसनाय न प्रयतते असाध्यतया। नैवासुरप्रकृतयः प्रभवन्ति वोद्धु मित्यभियुक्तप्रयुक्तेः। तथापि तत्र प्राप्तजन्माधिकाराणां कंसादीनां पूतनादीनां वसुदेवदेवक्यादिसत्सु भगवति च आजन्ममरणाभ्यस्तोत्तरोत्तराधिकमहाद्रोहाणामपि सत्तीर्थप्रभावतो नारदादिसंगसंजातभगवद्दर्शनस्पर्शादिना मोक्षे साक्षाद्दृष्टे को वा शंकावकाशः अतो मुक्तौ कश्चिदपि सन्देहो नास्ति एव। संमुखसंग्रामेऽपि तत्सिद्धेः मुक्तिर्हित्वान्यथाभावं स्वरूपेण व्यवस्थितिः। अनेन स्वस्वरूपानन्दानुभव एव मुक्तिः। स खलु स्वनिष्ठ एव न भगवन्निष्ठः अभेदभावनासाध्यत्वात्। अतः सकामतया फलाभिसन्धिरूपः-कैतवोऽत्र "अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन इत्युक्तेः। रतेस्तु विषयाधारभेदेन ममताकृततत्परत्व मेव लोकेऽपि यत्र ममता तत्र तत्र तत्परत्वं दृश्यते, "अनन्यममता विष्णौ ममता प्रेमसंयुता। भक्तिरित्युच्यते भीष्म—प्रल्हादोद्धवनारदैः" इति नारदपञ्चरात्रे। श्रीप्रह्लादेन पूर्वं पित्रे भक्तेर्नवधात्वमुक्तं। अत्र ममतैव भक्तिरित्युच्यते। भक्तिरत्र प्रेमाकुंररूपो भावः। यतः सा सर्वेश्वरे ममैवायं प्रभुरित्यनन्यतामुद्भावयति। तथा च प्रेमसंगतिः। भक्त्या प्रेमैव साध्यते नतु मुक्तिरितिनिर्णीतं। "सालोक्यसार्ष्टि-सामीप्य- सारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः। स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः"।
इत्यत्र " सुखैश्वर्य्यैत्तरा सेयं प्रेमसेवोत्तरेत्यपि।

सालोक्यादिर्द्विधा तत्र नाद्या सेवाजुषां मता॥"

इति निरुक्तेः। महतां मधुद्विट् सेवानुरक्तमनसामनुभवोपि फल्गुः। इतिच। किमुतारीणामपीत्यादिलेख्यं विशिष्टभगवत्प्राप्तिस्तु सन्मार्गसदुपासनयैव स्यात्। अजामिलस्य मृत्युपाशमुक्त्यनन्तरतथासिद्धेः। अतो भक्त्यारम्भत एव मोक्षः तदावृत्तिस्तु मिथोऽनुरागवृद्धिद्वारा सान्निध्यप्रापिकेत्युक्तमेव। विसृजति हृदयं न यस्य साक्षाद्धरिः। प्रणयरसनया धृतांघ्रिपद्म इत्याद्युक्तेः। अत्रकारिका-

व्यासो वेदादिकर्त्तेशावतारस्तत्प्रवर्त्तकः। ब्रह्मानुभाविनोप्यस्य नारदाद्भगवद्गतिः। प्रायेण भक्तियोगेण सत्संगेन विनोद्धव। नोपायो विद्यते सम्यगित्युक्तेः। अत्रायं क्रमः। आदौ येन केनापि व्यापारेण सत्संगः ततस्तत्प्रभावेन तदीयाचरणे सुखबुद्ध्या स्वाचरिते दुःखानुसन्धानं ततोनिर्वेदः ततः श्रद्धा ततः श्रवणादौ रुचिः ततः सकृच्छ्रवणकीर्त्तनादिना पापक्षयः। तदावृत्त्या तद्विषयाणां वासनामुपचयः, अपचयश्च पापवासनानां ततो भगवज्जनसेवासातत्यं ततस्तदुपवर्णितमहिमनि भगवति भक्तिः। सा च भगवदालम्बनो रत्याख्यः स्थायीभावः। तथाहि- "मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते"

इति भगवदुक्त्या सामान्यभक्तेर्मुक्तिः स्नेहभक्तेः स्वप्राप्तिः चेत्यभिहिता। मुक्तिस्तु भक्त्याभासमात्रेणापि किमुतारीणामपि। भक्तानां मुक्ति वितीर्य्यापि इतरदानिवन्न विरमति। अपि च स सर्वस्वात्मनमेव तदधीनं करोति। स्वसेवैकजीवनाहिते पूतनादीनां तदनुकरणेनापि तथा दृष्टेः। य एवं येन केनाप्युपायेन विमुखानां सर्वानर्थानपनयति निरतिशयं चार्थं सारुप्यादिकमुपनयति। तस्मिन् वाङ्मनआदिप्रणिदधानां मुक्तिमात्रं न युक्तमिति। यतस्तेषां ज्ञानकृतपापक्षयोऽपि मनसः क्षतिमेवावहति। न पुनः पूर्तिं। शान्तभक्तौ पर्य्यवसानात् किंच वेदप्रणिहितो धर्म्मोह्यधर्मस्तद्विपर्ययः। इत्यत्र वेदविहितनिषिद्धावहितौ तौ च "परोक्षवादा ऋषयः"

" स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्करा इति "

धर्मो मद्भक्तिकृत्प्रोक्तो ह्यधर्मस्तद्विपर्ययइत्यादि प्रमाणैः पापपुण्यशब्दाभ्यां भगवत्प्राप्तिप्रतिबन्धकाः सर्व एव पापानि तत्प्राप्तिसाधका एव पुण्यानीत्यभिप्रेयातां । यान्ब्रह्मेशो रमादेवी दधु मूर्द्ध्न्यघनुत्तये इत्युक्तेः । अतोऽन्यत्सर्वं तेषां विघ्नमेव । तथा चोक्तं "यस्मिन्न्यस्तमति र्न याति नरकं स्वर्गोऽपि यच्चिन्तने

विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः ।
मुक्तिं चेतसि यः स्थितोऽमलधियां पुंसां ददात्यव्ययं
किञ्चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते " ॥

यस्मिन्न्यस्तमतिर्नरकं न याति ।नरकशब्देन तु नाधर्मफलस्य ग्रहणं । आरम्भतस्तन्निवृत्तेः । अतो नराणां कं सार्वभौमत्वादिसुखं अन्तरायत्वेनापि न प्राप्नोति । स्वर्गोऽपिविघ्नः हैरण्यगर्भोऽपि लोकोऽल्पकः , मुरमथनभजनस्यातिविसदृशं फलं । सार्वभौमसेवाया इव स्वोदरं भरित्वं । अतस्तेषां प्राङ्-निर्दिष्टां मुक्तिमेव ददाति । अमलधियो हि ते। नहि तेषां मलधियामिव फलमुचितं इदमेवामलत्वं धियः । यद्भूत पुरुषोत्तमपादप्रवणत्वं स्वसुखार्थकामितफलद्वारेणैव समलत्वममलत्वं धियः । प्रोज्झितकैतव इत्यत्र प्रशब्देन मोक्षाभिसन्धिरपि निरस्त इत्युक्तेः ततश्च येषां धीः किञ्चिदपि तत्काममवलम्बते तेषामुचितान्येव सार्वभौमादीनि । येषां तु भुक्तिमुक्तिस्पृहोत्तीर्णा सा उत्तमश्लोकशिखामणिमेवावलम्बते । तेषां स्वाभिरुचितनिजपादसेवैवोचिता नतु तद्विरोधिकिञ्चिदन्यत् । " न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् । न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् " इत्याद्युक्तेः भावैकनिदानस्नेहभक्तिस्तु । " भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत् कुटस्थो रतिरात्मन् यतो भवेत्" इत्याद्युक्तरतिरूपैव । तथाहि-

" आनुकूल्येन येन्द्रियाणां वृत्तिः श्रीपुरुषोत्तमे ।
सैषा भक्तिर्द्विधा साच साध्यसाधनभेदतः ॥
आनुकूल्यविपर्य्ययाद्भयादीनां न भक्तिता ।
वहवस्तदघं हित्वेत्यादौ पापश्रुतेरपि ॥
तादृङ् मनोनिवेशस्तु मुक्तेर्हेतुः परो मतः ।
अन्यथा नरकायैव द्वेषादिर्वेणवद्भवेत् ॥
तस्मात्केनाप्युपायेन मन इत्यादिकं ततः ।
आनुकूल्ये विधिं प्राह कैमुत्यान्नारदः स्वयं ॥
ज्ञानिनः सममात्मानं स्मरन्ति चारिणोऽधिकं ।
भक्ताः प्रभोः सदाधीनं भक्तेर्भक्तेष्वतो रतिः ॥
इन्द्रियक्रियया साध्या रतेरुत्पादिका च या ।
साधनाख्या भवेदेषा मिश्रामिश्रा द्विधा पुनः ॥
नित्यसिद्धाश्रयतया रतिर्नित्याभिधीयते ।
तस्याः प्रकटनं स्वान्ते बुधैरुत्पादनं स्मृतं ॥
कर्मज्ञानान्यकामैस्तु मिश्रणान्मिश्रिता त्रिधा ।
एतैरमिश्रणादन्या शुद्धाभक्तिरुदीरिता ॥
सर्वशक्तिमयी शुद्धा भक्तिः सर्वोत्तमोत्तमा ।
अस्यामेव ततस्तस्मादभावेणादितोविधिः ॥
अस्या एवाभिधा नित्या निर्गुणाव्यभिचारिणी ।
ज्ञानमुक्त्यादिहेतुत्वं यदस्याः श्रूयते फलं ।
तदवान्तरमेव स्यात्किन्तु मुख्यफलं रतिः ॥
स्वर्गादिफलता भक्तेर्यत्पुनःश्रूयते क्वचित् ।
वहिर्मुखप्रवृत्त्यैतदारोग्ये लड्डुकं यथा ॥
श्रवणं कीर्त्तनं चैव स्मरणं पादसेवनं ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनं ॥
शरणापत्तिरित्युक्ता दशधा साधनाभिधा ।

एष्वेवान्त र्भवेतेयुस्ते गुरुपादाश्रयादयः ॥
इत्युक्ता साधनाख्या तु साध्याभक्तिरथोच्यते ।
साधनैः साध्यते यातु सा साध्यारतिरुच्यते ॥
शान्तिर्दास्यं तथा सख्यं वात्सल्यं मधुरेत्यपि ।
एषा पञ्चविधा प्रोक्ता रतिर्भक्तेषु पञ्चसु ॥
शान्तानुग्राह्यमित्राणि गुरुवश्च प्रियास्तथा ।
इति पञ्चविधाः प्रोक्ता भक्ताः कृष्णस्य विश्रुताः ॥
साधकेषूदयत्येषा विंववत्स्वानुवर्त्तिषु ।
यस्य यादृक्भक्तसंगो वासनाप्यस्य तादृशी ।
यथोत्तरमसौ स्वादविशेषोल्लासवत्यपि ॥
रतिर्वासनया स्वाद्वी भासते क्वापि कस्यचित् ।
शान्ते तु ममाताभावाद्दास्यादिषु चतुर्स्वपि ॥
उत्तरोत्तरतः पूर्वपूर्वकार्य्योपलम्भतः ।
आधिक्यं स्यात्ममतायाः सम्वन्धसन्निधिक्रमात् ॥
तदाधिक्यानुरूपोसौ गौरवोप्यपचीयते ।
यादृशोपचयस्तस्य स्नेहोल्लासोपि तादृशः ॥
स्नेहोल्लासात्प्रकाशन्ते न प्रभावैश्यर्वैभवाः ।
पैत्रगोत्रकुलत्यागैः कर्मांगत्वेन चै व हि ॥
दासादिभ्योऽपि पत्नीनां रतिस्तस्माद्विशिष्यते ।
एष वा आत्मनो अर्द्धं यः पत्नीतिश्रुत्यात्मनो ।
अर्द्धत्वे पत्नीमुद्दिश्य सैव श्रुतौ हि निर्द्दिष्टा ।
अतोऽव्यभिचारिणीति मधुरारतिरुच्यते ॥
तन्न नापेक्षयान्यसां व्यभिचारित्वमर्थतः ।
गौरवोत्तरसेवामि रसापत्न्येन च श्रियः ॥
नात्युद्गच्छंति मानाद्या रत्युत्कर्षं स्वरूपिनः ।
पुत्राद्यन्यविषयाप्स्या विधे गौरवयंत्रतः ॥

पातिव्रत्यैव निष्टाप्ता महीषीषु समजंसा ।
प्रेमानुभाव एवासां धर्मादिषु यत्राग्रहः ॥
तथापि स्वगणापेक्षी तारतम्योऽनुवर्त्तते ।
अस्या आरम्भत इदृक् सांमजस्यात्समंजसा ॥

स्वीयात्वेऽपि व्रजस्त्रीणां प्रच्छन्नकामुकत्वतः।
धर्मादत्यु पेक्षिरागाच्च समर्था सूदयत्यसौ ॥
रत्युत्कर्षावधिर्महाभावो गोप्यस्तदात्मिकाः ।
अतस्तास्वेव कृष्णेन निरवद्येति सा स्तुता ॥

न पारयेऽहमित्युक्त्वा तासामृणितया स्थितः ।
निरवद्या रति र्जीयाद्यया कृष्णोऽपि ऋणीकृतः ॥
व्रजस्त्रीष्वेव राजंत्याऽतोऽसौ सर्वोत्तमोत्तमा ।
परैकाव्यभिचारिणीत्याख्यास्याः साधुसंमता ॥

सम्भोगेच्छा विशेषोऽस्या रतेः कृष्णसुखार्थिका ।
पूर्वस्यां स्वसुखायापि कदाचित्तत्र संभवेत् ॥
रतिरस्तु मेऽनवद्येत्युक्त्वा श्रीभीष्मबर्मणा ।
याचितैषैव कृष्णाय विजयासंगसंगिने ॥

नोद्धवोऽण्वपि मन्युन इति कृष्णेन यः स्तुतः ।
स उद्धवोऽपि संभ्रान्तस्ता नमस्यन्निदं जगौ ।
क्वेमाः सर्वाराध्यपादाः क्व वयं व्यभिचारिणः ॥
दूरस्त्वेतद्भावलिप्सा नाधिकारोऽपि तन्नतेः ।

तन्नतेर्योग्यतापन्नौ तत्पादाब्जरजोजुषां ।
वृन्दाबनतृणादीनां नतिरेवात्र कारणं ॥
तदप्यासां निवासांतेवासिस्त्र्यंघ्रिरजोनतेः ।
स्यादित्याह निश्चित्य दण्डवत्पतितो भुवि ॥
बन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।
यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥

महिषीणां गणोऽप्येतत्सम्बध्यंघ्रिरजो हरेः ।
चकमेऽतो रतेरस्याः साधूक्ता निरवद्यता ॥
कामयामह एतस्य श्रीमत्पादरजः श्रियः ।
पूर्णाः पुलिन्द्यः उरुगायपदाब्जराग—
श्रीकुंकुमेन दयितास्तनमण्डितेन ।
तद्दर्शनस्मररुजस्तृणरूषितेन
लिम्पन्त्य आननकुचेषु जहुस्तदाधिम् ॥
रुक्मिण्यादिरमोरोजसम्बध्यंघ्रिरजो हरेः ।
सुलभत्वाच्छ्रियोऽन्यस्याः कुचकुंकुमगन्धिनः ॥
रजसः प्रार्थना युक्ता पौर्वापर्य्यानुसारतः ।
महिषीगणवाक्येन गोपीवाक्यसमन्वयैः ॥
गणद्वयविशिष्टेयं श्रीराधिकैव संस्तुता ।
ह्लादिनी या महाशक्तिः सर्वशक्तिवरीयसी ।
तत्सारभावरूपेयं इतिं तन्त्रे प्रतिष्ठिता ॥
राधया माधवो देवो माधवेनैव राधिका ।
बिभ्राजंते जनेस्वेत्यृक्परिशिष्टेपि कीर्तिता ॥
देवी कृष्णमयी प्रोक्ता राधिका परदेवता ।
सर्वलक्ष्मीमयी सर्वकान्तिसन्मोहिनीपरा ॥
कृष्णाभिन्नतया बृहद्गौतमीय इति ईरिता ।
अनेन नाममंत्रेण योऽस्मिन्मासि त्वया सह ।
मामर्चयेद्विधानेन स लभेत्सर्ववाञ्छितं ॥
श्रीराधां वामभागेतु पूजयेद्भक्तितत्परः ।
इत्यादिकार्त्तिके नित्यं राधादामोदरार्च्चनं ॥
यो मामेव प्रपन्नोऽपि मत्प्रियां न महेश्वर ।
न कदापि स आप्नोति मामेवं ते मयोदितं ॥
सनत्कुमारतंत्रे स्युरित्यादि वचनान्यपि ।
अकारेणोच्यते विष्णुः श्रीरुकारेण चोच्यते ।

मकारस्तु तयोर्दास: पञ्चविंश: प्रकीर्त्तित: ।
कामबीजप्रणवयो रैक्या तात्पर्य्यचर्य्यया ।
सेवा सा प्रियकृष्णस्य मुख्यत्वेन दृढ़ीकृता ॥
इत्थं सेव्यसेवकयोरन्यन्नास्तीह किंचन ॥
सेवैव स्यान्मुख्यधर्म्मस्ततोऽन्येषां स्वरूपत: ।
राधिकायां रतेरस्या अतएव परावधि: ।
महाभावपरांकोटिं प्रेमास्या: क्रमते यत: ॥
सर्वगोपीषु सेवैका इति पाद्मे यत: स्तुता ।

श्रवणादिसाधनभक्तिभि: पादसेवनमेव साध्यते। भगवत:त्सुखतमरूपस्य तस्य साधनसाध्यैकरूपतया श्रैष्ट्यात्। तत्तु सेवकस्वरूपस्य जीवस्य स्वाभाविकतयावश्यकमेव। श्रवणादीनां तदुपकरणतया न पृथकत्वं तदपि युगलाश्रयणे नैव समीचीनं स्यात् । तत्र विषयाधारयोराधाररूप श्रीराधिकाचरणाश्रयणमेव युक्तं। तथाहि श्रीवृन्दावन एव तच्चरणरेणव: । तदुपासनयैव तच्चरणप्राप्ति: " आसामहो चरण जुषामहं स्यां बृन्दाबने किमपि गुल्मलतौषधीनाम् । यादुस्त्यजं स्वजनमार्य्यपथं च हित्वा, भेजुमु कुन्दपदवीं श्रुतिभिर्बिमृग्यामित्युक्ते:" ।

अनाराध्य राधापदाम्भोजरेणू
मनाश्रित्य बृन्दाटबीं तत्पदांकाम् ।
असम्भाष्य तद्भावगम्भीरचित्तान्
कुत: श्यामसिन्धो रसस्यावगाह: ॥

इति श्रीमहाप्रभुचरणै: श्रीकृष्णप्राप्तिरन्येषामप्यस्ति किन्तु पूर्णरसास्वादस्त्वेतच्चरणप्रसादैकलभ्यइति सूचित: । सच रस आधारभेदेन एक एव विभिद्यते इति कपिलोक्तिप्रामाण्यात् । रसशास्त्रे ब्रह्मानन्दसमतया यो रसस्तुतस्तस्य भक्तिरस एव पर्य्याप्ति: । स भक्तिरसोपि यथोत्तरस्वादुविशेषोल्लासवत्तया मधुर एव सम्यगास्वादतामुपैति । तथा श्रीवृन्दावनमपि वैधभक्तत्युपचित महिमद-

ष्टया आगमादयुक्तभूमिश्चिन्तामणिगणमयीत्यादिरूपेण सर्वोद्ध्र्वं गोलक एव प्रकाशते । रागानुगाभक्तयुपचितकेवलप्रणयरूपमाधुर्यदृष्टया श्रीमद्भागवतोक्त-कृष्णाया हस्ततरलाञ्चितकोमलवालुकमित्यादि रूपेणात्रैव प्रकाशते । ब्रह्महृदस्नानतो व्रजजनैस्तथा दृष्टत्वात् । मल्लानामशनि नृणां नरवर इत्यादयुक्तस्वस्वमत्यनुरूपभगवत्प्रकाशवत्तल्लोकतत्परिकरादीनामपि च तथा प्रकाशः । अस्यामेव रतौ ध्वंसकारणे सत्यपि सर्वथाध्वंसरहितं मिथो यद्भावबन्धनं स प्रेमा । स च परां काष्टामारुह्य हृदयं द्रावयन्स्नेहः । सोऽपि नवनबमाधुर्याप्त्या आदाक्षिण्यं धारयन्मानः । अयमपि विस्रम्भं दधानः प्रणयः । महादुःखमपि सुखतयानुभावयन्नसौ रागः । सदानुभूतमपि प्रियं नवं नवं कुर्व्वन्नयमनुरागः । स्वसंवेद्य दशां प्राप्योऽसौ महिषीगणदुर्ल्लभो व्रजदेव्यैकसंवेद्यो महाभावः । मोदनो मादनश्चैत्यसौ द्विविधः । राधिकायूथ एव मोदनः परात्परो मादनः सदा श्री राधिकायामेवानन्यगत्योदेति ।

प्रेमान्तिमां हि सामान्या[illegible]गान्तां समञ्जसा ।
रतिर्भावान्तिमां सीमां समर्थैव प्रवर्त्तते ॥
स्फुरन्ति व्रजदेवीषु पराभावभिदाश्रयाः ।
तास्तर्कागोचरतया न सम्यगिह वर्णिताः॥
रसिकानां सतां हास्यरसास्वादकृते कृतं ।
धाष्टर्यं चैतन्यदासेन रिक्तान्यगुणशालिना ॥
सेवा प्रभावविज्ञप्त्यै श्रीगोविन्दपदाब्जयोः ।
साहसोऽत्यधमेनापि कृतः साध्वनुवृत्तये ॥
स्वांतध्वान्तमपाकर्त्तुं प्रयत्नतः प्रदीपिता
सद्दृष्टया स्यात्समुद्दीप्ता भक्तितत्वप्रकाशिका ॥

इति श्रीचैतन्यदासकृता भक्तितत्वप्रकाशिका समाप्ता । सम्वत् १६८६ वर्षे फाल्गुनवदि पञ्चम्यां समाप्तमिदंपुस्तकं लिखितत्वेन
॥ शं भूयात् ॥

# ❀ गीतिविंशतिका ❀

श्रीराधारमणं नत्वा गुरुं चैतन्यविग्रहम् ।
गीतानि कानिचित्स्वेच्छाजातानि विलिखाम्यहम् ॥

## राग रामकली

श्रीलकृष्णचैतन्यप्रभो जय मिश्रपुरन्दरनन्दन हे । [ध्रु०]
शचीस्तनंधय भक्तजनाश्रय कृतजगदीश्वरबन्दन हे ।
नित्यानन्दे षड्भुजदर्शक गौड़विप्रकुलमण्डन हे ।
श्रीलाद्वैतमनोरथपूरक विमतध्वांतविखण्डन हे ।
बिश्वरूपलघुभ्रातः श्रीलगदाधरभावबिवर्द्धन हे ।
श्रीश्रीवासगृहे कृतकीर्त्तन भावविवशकृतनर्त्तन हे ।
गोपीनाथ यशोदानन्दन कृतकलियुगजनपावन हे ।
दीने मयि कुरु करुणामधुना दुर्गतिसुगतिविभावन हे ॥१॥

## पूर्वरागः—

स्वान्त सखे त्वं भज चैतन्यम् ।
दीनोद्धारकममितगुणं तमृते भुवि वस्तुविलोकय नान्यम् ।
तद्भजनोपायानवधारय नाम कथा श्रीबृन्दारण्यम् ।
गोपीनाथपूजनं सज्जनसंगतिरिति कुरु भावमनन्यम् ॥२॥

—:०:—

जय जय राधारमण हरे ।
श्रीगोपालभट्टप्राणाधिक प्रीतिरस्तु मे त्वयि किमवरे ।
श्रीबृन्दाबिपिनांगणभूषण रासरसिक मुखवेणुधरे ।
गोपीजनसुखदायक माधव निजसेवकगणप्रीतिपरे ॥३॥

## मल्लारराग:

चल बनमाकारयति बिहारी ।
बिहरति नीपतले खल्वेको नहि कापि ब्रजनारी ।
श्रीराधे श्रीराधे गायति निजबेणौ गिरिधारी ।
स्वबशे कत्तुं गोपीशेभं त्वं बिधि रचिता वारी ॥४॥

माधव लोकय निकटे बृष्टिम् ।
आर्द्रा मम शाटीह भबिष्यति मा कुरु पीतपटस्याकृष्टिम् ।
चपला चपलं हृदयं कुरुते बधिरां श्रुतिमिह बिहतां दृष्टिम् ।
नहि शक्नोमि विभिन्ना स्थातुं हे गोपीश रचय संसृष्टिम् ॥५॥

## यथाराग:

सखि हरिबिरहे निद्रा मम न ह्यायाता ।
पल्यंके सर्वा निशा क्लेशतो याता ॥
प्रातः समये खलु दिष्टवशाद्दृग्लग्ना ।
स्वप्ने प्रियरूपे दृष्टे सा रुग्भग्ना ॥
मानं कर्त्तुं यावदहं कृतचित्ता ।
तावत्प्रेयो धृतपादतला संवृत्ता ॥
यस्मिन्समयेऽहं शरलीभावेऽनुरता ।
तस्मिन्निद्रा बैरिणी न जाने क्व गता ॥
भूयो मामर्दयतीह दशामतिहीनाम् ।
गोपीशं दर्शय जीवय सहचरि दीनाम् ॥६॥

## भैरवराग:

राजति रत्नखचितपल्यंके श्रीराधाबनमाली ।
परितः सर्बसखीततिरग्रे प्रेष्ठतमा ललितालो ॥
राधापीतपटेन धृतानीलेन हरिः सुखशाली ।
प्रियतमदेहः स्फुरति समन्तादालक्तककुचकुंकुमजाली ॥

प्रियावपुषि कुचमण्डलयुगले लसति हरे नखराली ।
नीराजनसमये रचिता नवगोपीभिः करताली ॥७॥

## मल्लाररागः

सखि त्वं नन्दसूनुनाहूता ।
कृतश्रृङ्गारा चल मृगनयने स्नानादिभिरतिपूता ॥
त्वामानेतुमिहायाताहं श्रीहरिणा परिणूता ।
श्रीबृन्दाविपिने गोपीशं भज कन्दर्पविशिखपरिभूता ॥८॥

## भम्भोटीरागः

पदयुगलेयं लसति लालिमा ।
विद्रुमपुंजनलिनततिवदने तं बिलोक्य सखि भवति कालिमा ।
तुलाकोटिकांचनगिरितोऽधः प्रगे यथा दिनमणेरालिमा ।
कृष्णघनोल्लासिनी चंचला गुणयुतगोपीहृदयनालिमा ॥९॥

## गौरीरागः

बनतो गेहमेति बनमाली ।
धेनुरेणुमण्डितकुन्तलततिरमितं मुरलीबादनशाली ॥
निशानाथमिव सन्ध्यासमये तं बिलोक्य बिहसति बिपिनाली ।
उपसदनं गोपीशं दृष्ट्वा बर्षति पुष्पचयं सुहृदाली ॥१०॥

## अलहियारागः

माधव किं नहि नीरं एता ।
मम सहचर्य्यो दूरं याता मार्गे बिचरति माता ॥
चेदायास्यति देहोऽयं प्रियवचनमिदं तव पाता ।
गोपीनाथ हठं त्वमहो त्यज बल्लवजनसुखदाता ॥११॥

## काफी तथा आशावरी च रागः

सुन्दरबल्लबरामाः संचेलुरमन्दं नन्दनिकेतम् ।
तोरणकलशदीपदधि रम्भालाजाक्षतसमवेतम् ॥

वस्त्रतरंगमुखाम्बुजभूषणरेणुनिचयपरिवीताः ।
नयनमीनकुचकोककेशशैवालकपुंजपरीताः ॥
नूपुरकलहंसनाभिनतचक्रयुतागतिपूराः ।
सरित इवेयुरथो व्रजपतिगृह सिंधावशुभविदूराः ॥
वीक्ष्य यशोदातनयं सर्वा आशिष ऊचुर्बालाः ।
पाहि चिरं गोपीसन्दोहं नन्दं सुखय विशालाः ॥१२॥

## अथ होलाखेला (कलिंगरागः)

माधव मा प्रक्षिप पटवासं ।
मम सिचयं मलिनत्वं यास्यत्येवं याति च हृन्मे त्रासम् ॥
मामवलोक्य सहर्षं कूर्दसि गायसि बिरसाभासम् ।
एवं खेला तिष्ठतु यस्यां रचयसि कपटबिलासम् ॥
औद्धत्यं त्यज गोपीमोहन मा कुरु बहुपरिहासम् ।
तव चरित कथयानि सखे क्व करोमि न चात्र निबासम् ॥१३॥

## गौरीरागः

श्रीलशची प्रासूत सुबालं ।
स्वतनुप्रभाजितहाटकजालम् ॥
फाल्गुनराकाशश्युपरागे ।
ऋतुराजागमतद्दुदितरागे ॥
श्रुत्वेति च पुरवनिता घोषं ।
चेलुरथो गृहतः कृततोषं ॥
मिश्रो व्रह्मानन्दनिमग्नः ।
तुष्ट बिप्रवर सूचितलग्नः ॥
तत आरभ्य महागुणयुक्ता ।
क्ष्मासीत्प्रेमधनेन सुशिक्ता ॥
गोपीनन्दन गिरिबरधारी ।
यो हि स एव शचीसुखकारी ॥१४॥

सुषुवे शची तनूजमुदारं ।
तपसि मासि राकेन्दुग्रहणे रात्रिमुखे भान्यंकृतमारं ॥
आकर्ण्येति पुरस्था बनिता संजग्मुर्गायंत्यस्तारं ।
भक्ता शीलयंतु मद्भणितं श्रीगौराङ्ग स्मारं स्मारं ॥१५॥

### खटरागेण गीयते

निःसरंतु गोपाल गोपाल्यो वयमिह संप्राप्ताः हे ।
उन्मार्गान् बिचरथ्य चाधुना किं बाग्मी वाक्लृप्ता हे ॥
गोपीश्वरीपदाब्जे धृत्वा शपथं कुरुथ सुहृद्दृप्ता हे ।
उक्त्वैवं परिबव्रुः कृष्णं श्रीराधिकयाज्ञप्ता हे ॥१६॥

### बसन्तरागः

खेलति हरिरिह सरसबसन्ते ।
कुंकुममृगमदचन्द्रो रजोभरधूसरसकलदिगन्ते ॥
जातुवपुटिकारत्नखचितजलयंत्रनिचययुतहस्ताः ।
गोपा किल गायन्ति च रागान् परितो हर्षविहस्ताः ॥
घनततसुषिरबाद्यभेदानिह बादयन्ति मधुमत्ताः ।
गोपीमण्डलमभितो गर्जनतर्जनबिरचनयत्ताः ।
तस्मिन्समये श्रीराधिकासखीनिचयः कृतयत्नः ।
तन्मण्डले प्रविश्य हरिं धृतबानिह संधृतरत्नः ॥
कापि कराद्बलुंचति बेणुमथान्या तद्बनमालाः ।
लिम्पति मुखमेका कुङ्कुमपंकेन ततो ब्रजबाला ।
यन्त्रादिकमबलुम्पति तस्य सखीततिरमितगुणा सा ।
जितमिति जितमिति बारं बारं जल्पति मदनबिलासा ।
कातरभावगतं हरिमेत्य निबारयति स्म सखी सा ।
श्रीराधाभयमिहिमा मोहननिकटेऽस्मीति सहासा ।
तदबसरे बनमाली चालीनिचययुतामतिहर्षः ।
एकां ललितनिकुञ्जगृहाय प्रफुल्लतनुं बिचकर्ष ।

एवं प्रतिदिवसं खलु खेलारसदोलायितचित्ते ।
श्रीराधागोपीशो विहरति इह मे जीवनवित्ते ॥

## सोरठीरागः

एकाकिनी मा गाः यमुनातीरे ।
श्रीमति यौवनमणिवलिते कुलभामिनि धीरसमीरे ॥
चोरयति तव वसु लुण्ठिष्यति परिधत्से किमु चीरे ।
तं प्रति लपितुमशक्ता भवती पठनसमीकृतकीरे ॥
बह्वालिंग्य सुचुम्ब्य मुखं तव धृत्वा ललितकुटीरे ।
चलनविकूजितरसने शशिमुखि कुचयुगलिप्तपटीरे ।
गोपीनां परिहास्यं यास्यसि गृहमागत्य कुधीरे ॥१९॥

## रामकलीरागेण गीयते

चित्त सखे चिन्तय गोपालं ।
हे हंकाराहंकरणं त्वं योजय तत्र तवान्येनालं ॥
वुद्धे वोद्धव्यस्तव नान्यस्तमृते श्रीव्रजनरपतिवालं ।
त्वं मानस संकल्पय तस्मिन् भावय तं शरणागतपालं ॥
नेत्रकर्णजिह्वात्वङ्नासास्तं स्वं स्वं विषयं कुरुतालं ।
हेयादौ गमनादि विधाय विलोकय तं धृतगुञ्जामालं ।
हस्तौ तत्परिचरणमन्तरा नहि कुरुतां किमपि ह्यनुकालं ।
मुख तन्नामोच्चारय साधनमेकं यद्युगमस्ति करालं ।
नारदादिमुनयो गायन्ति तमेव तिरस्कृतसंसृतिजालं ।
अत उभयेन्द्रियगण भजरे गोपीजनमानसदिव्यमरालम् ॥२०॥

इति श्रीगोस्वामिश्रीगोपीलालकृता स्वेच्छाविलसिता
समयक्रमरहिता गीतिविंशतिका समाप्ता
संवत् १९३७ मिति कार्त्तिक सुद ४ शनिवार हस्ताक्षर
वैष्णवसेवादासस्य

---

# ❀ श्रीभक्तिविवेकः ❀

नियत-स्थान-विशिष्टं परिकरनियतं च राधया 'कृष्णम्' ।
गुणकृदलंकृतिनित्यं वंदे प्रेष्ठं न वान्यसंयुक्तम् ॥१॥

अस्यार्थः-नियतं वियोगरहितं, स्थानं वृन्दाबनं तेन विशिष्टं, राधया सह परिकरैः परिवारैः नियतं अविच्युतम् । तदुक्तं गर्ग-संहितायां श्रीराधाजन्मप्रस्तावे— "मृगराज-महालग्ने तदा प्रादु-र्भविष्यतीति"। गुणा-धीरललितदिगुणाः,श्रीराधायाः गुणा मध्या-स्वाधीन-पतिकादयः कृत् कर्म च अलंकृतिश्च ताभिर्नित्यं वात्सल्य-रसालंवनत्वेपि मधुररसाश्रयगुणादेरविच्छेदात् । एतादृशं श्रीकृष्णं प्रेष्ठं प्रेष्ठत्वेन वंदे । न तु अन्यसंयुक्तं, श्रीमधुररसपरिकरीभूत-द्वादशरसान्यतमाश्रयश्रीवृन्दाबन-गुण-कृति-भूषणविशिष्टं श्रीकृष्णं प्रेष्ठत्वेन वंदे, न तु केवलमित्यर्थः । ननु केचित्प्रकारांतरेण वर्ण-यंतो दृश्यंते सत्यं तेषां परस्परविवाददर्शनाद्यथार्थदर्शका न भवन्ति । तथा हि—

"कृषिर्भूवाचकः शब्दो णश्च निर्वृति-वाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥"

इति वाक्ययथार्थज्ञानाभावाद्ब्रह्मेति वदंति, "शंख-कौमोदकी-पद्म-चक्रैः श्रीकृष्ण उच्यते" इति चतुर्भुजत्वम् । कृषति विदारयति संसाराटवीमिति कृष्णः कर्षति आत्मसात्करोति ज्ञानिनमिति कृष्णः परमात्मेति वदन्ति । यदि यथार्थदर्शकाः स्युस्तर्हि घट-कलशन्यायेन ब्रह्मचतुर्भुजोपासकयोः विवादो न स्यात् । भवति च विवादः ततो यथार्थदर्शका न भवन्ति । अयमर्थस्तु द्वयाधि-

कारिणो ज्ञेयो नान्यैः । तर्हि को वा यथार्थः ? श्रृणु श्रीकृष्णशब्दस्येन्द्रनीलजलदश्यामांगे विग्रहिणि रूढ़त्वात् 'रूढ़िर्योगमपहरतीति' न्यायात्। तर्हि ब्रह्म-चतुर्भुज-परमात्मवाचकः कृष्णशब्दो न भवति। को ब्रूते न भवति, परन्तु धर्मवाचकत्वेन श्रीकृष्णधर्मिणं वदन्ति। पाचको देवदत्तः न हि पाचकत्वं देवदत्तस्वरूपमपि तु धर्मः । तथा श्रीकृष्णस्य धर्मा ब्रह्म चतुर्भुजादयः धर्मत्वं च ब्रह्मणो हि प्रतिष्ठाहमित्यादि श्लोकैः विवृतं भक्तिभूषणे। तदुक्तं धृतराष्ट्रं प्रति संजयेन—

"कृषिर्भूवाचकः शब्दो णश्च निवृत्ति-वाचकः।
कृष्णस्तद्भावयुक्तत्वात्कृष्णो भवति सात्वत" इति।

भगवन्नामकौमुदीकृद्भिरप्युक्तं—कृष्णशब्दस्य तमालश्यामलत्विषि यशोदास्तनंधये रूढ़त्वात् न निर्गुणे ब्रह्मणीति। अत एव भगवत्त्वेपि त्रैविध्यम्—

"ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा॥"
"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" च।
"स्तंभनं मोहनं रूपं बलं वैदग्ध्यमेव च।
अभिलाषोपपन्नं च षण्णां भग इतीर्यते" इति च।

त्रिविधमैश्वर्यं श्रीकृष्णस्य। पुनः कीदृशं नियतस्थानविशिष्टं नियतस्थानं वृन्दावनं तेन विशिष्टं तत्रस्थमित्यर्थः। भक्तिमबलंव्योत्पथगामित्वं अतारकत्वमेव॥ तदुक्तमाचार्येन "हठेनोत्पथगामित्वं दुर्विवेकतयालयः॥ औद्धत्यं विमतिर्वाम्यमिति स्यात्त्रिविधः रूपः"। नियतस्थानत्वे प्रमाणं श्रुति पुराणागमाः। तथाहि गोपालोपनिषदि—

"प्राप्य मधुपुरीं रम्यां सदा ब्रह्मादि-सेविताम्।
शंख-चक्र-गदा-शार्ङ्गैः रक्षितां मुशलादिभिः॥

यत्रासौ संस्थित: कृष्ण: त्रिभि: शक्तया समाहित:" ॥

"सहोवाच गांधर्वी कथं वास्मासु जातोऽसौ गोपाल: कथं वा ज्ञातोऽसि त्वया मुने कृष्ण: को वास्य मंत्र: किं स्थानमिति" गांधर्व्वा मुख्या काचिद्व्रजदेवी तया पृष्टो दुर्वासा वदति ।"यथा हि सरसि पद्मं तिष्टति तथा भूम्यां हि तिष्टतीति" । चक्रेण रक्षिता ह वै मथुरा तस्माद्गोपालपुरी हि भवति" ॥

बृहद्गौतमीये –

"पंचयोजनमेव हि वनं मे देहरूपकं ।
सर्वतेजोमयश्चाहं न त्यजामि वनं क्वचित् ॥
तेजोमयमिदं रम्यमदृश्यं चर्मचक्षुषाम् " ॥

इदमेव वृन्दावनं अभक्तानां पांचभौतिकस्फुरणं यथा कृष्णस्वरूपं राक्षसानां प्राकृतस्फुरणं तद्वत् । काशीखंडे :—

'हृद्यं मधुवनं प्राप्य यमुनायास्तटे महत् ।
आद्यं भगवत: स्थानं यत्पुण्यं हरि मेधस: ॥"

संमोहनतंत्रे पंचमेऽध्याये पटले--

"ध्यायेद्वृंदावनं सम्यक् सिद्ध-चारणवेष्ठितम् ।
गो-गोप-गोपिकाक्रांत-कल्पपादपशोभितम् ।
तन्मध्ये द्विभुजं ध्यायेत् पंचवर्षमथाच्युतमिति ।"

गर्गसंहितायां—

"पंचयोजनविस्तीर्णमुद्घालं राधिकाप्रियमिति ।"

बृहत्वामने---

श्रुत्वैतद्दर्शयामास स्वलोकं प्रकृते: परम् ।
केवलानुभवानंदमात्रमक्षरमव्ययम् ।
यत्र वृन्दावनं नाम वनं कामदुघैर्द्रुमै: ।
मनोरमनिकुंजाढ्यं सर्वर्त्तुसुखसंयुतम् ।
यत्र गोवर्द्धनो नाम सुनिर्झरदरीयुत: ।
रत्नधातुमय: श्रीमान् सुपक्षिगणसंकुल: ।
शश्वद्रासरसोन्मत्तं यत्र गोपीकदम्बकम् ।

तत्कदंबस्य मध्यस्थः किशोराकृतिरच्युतः।
दर्शयित्वेति च प्राह ब्रूत किं करवाणि च।
दृष्टो मदीयो लोकोऽयं यतो नास्ति परं वरमिति ॥"

इत्यादि वैकुंठस्थेन भगवतोक्तं श्रुतिं प्रति श्रुतिभिरपि वैकुण्ठथमीश्वरं विहाय वैकुण्ठस्थानं च विहाय श्रीकृष्णे श्रीवृन्दावने च कामना कृता अतोऽत्र श्रेष्ठता। श्रीभागवते च—"ददृशु र्ब्रह्मणो लोकं यत्राक्रूरोऽध्यगात् पुरा।" इत्यत्र गोपानां वैकुंठदर्शने जातेऽपि तत्राशक्ति र्न जाताऽतोऽत्रैव श्रेष्ठता। क्रमदीपिकायां च—

"अथ प्रकट-सौरभोद्गलितमाध्विकोत्फुल्लसत्
प्रसूननवपल्लवप्रकरनम्रशाखै र्द्रुमैः।
प्रफुल्लनवमंजरीललितवल्लरीवेष्टितैः।
स्मरेच्छिशिरितं शिवं सितमतिस्तु वृन्दाबनमि"त्यादि ॥

श्रुति-प्रार्थनानंतरं भगवद्वाक्यं—
"पृथिव्यां भारते क्षेत्रे माथुरे मम मंडले।
वृन्दावने भविश्याश्च प्रेयस्यो रासमंडले"-इति।

पाद्मे निर्वाणखंडे—
"नित्या मे मथुरां विद्धि वनं वृन्दाबनं तथा।
यमुनां गोप कन्याश्च तथा गोपालवालकान् ॥"

गर्गसंहितायां श्रीराधाजन्मप्रसंगे—
"मैत्रस्य प्रथमे पादे कुर्याच्छांति समाहितः।
नाम्ना प्रतिष्ठिता विप्र नरभद्रेंद्र भूषणा।
मृगराजमहालग्ने तदा प्रादुर्भविष्यति ॥"

श्रीवाराहे पुराणे—
"गर्त्तेश्वर-भूतेश्वरे द्वे कोटि-दक्षिणोत्तरे।
नित्यं वसामि वसुधे न त्यजामि कदाचन ॥"

आदिवाराहे—

"कर्णिका योजनं चात्र सदाहं तत्र संस्थितः ।"

श्री भागवते—

"मथुरा भगवान् यत्र नित्यं संनिहितो हरिः ।"

वायुपुराणे—

चत्वारिंशद्योजनानां ततस्तु मथुरा स्मृता ।
यत्र देवो हरिर्साक्षात्स्वयं तिष्टति सर्वदा ॥

ब्रह्म संहितायां—

आनन्द-चिन्मयरसप्रतिभाविताभि
स्ताभिर्य एव निजरूपतया कलाभिः ।
गोलोक एव निवसत् परलाभ भूतो
गोविंदमादिपुरूषं तमहं भजामि ॥"

स्वर्गावांतरगोलोकः प्राकृतः तत्रानंदचिन्मयनिजरूपतादीनाम-भावात् । रसज्ञास्तु श्रीवृन्दाबनांतःपातिनं गोलोकं वदन्ति । महापुरूषाणामनुभवश्च । उक्तं वांते-

स यत्र क्षीराब्धिः सरति सुरभीभ्यश्च सुमहान्,
निमेषार्द्धाख्यो वा व्रजति न हि यत्रापि समयः ।
भजे श्वेतद्वीपं तमहमिह गोलोकमिति यं,
विदंतः ते सन्तः क्षितिविरलचाराः कतिपये ॥"

गौतमीयतंत्रे—

अगम्यं वासुदेवस्य लोकं पद्ममयं शिवम् ।
अवैष्णवानां दुरादर्श्यं दुर्गमं योगिनामपि ॥

तत्रैव नारदवाक्यं गौतमं प्रति—

"ततो गृहीत्वा मां देवः प्राविशन्मधुरं वनम् । श्रीवृन्दाबन-माख्यातं यद्विरंच्यादिदुर्गमं ।" पाद्मे--"अहो न जानन्ति दुरा-शयाः जनाः पुरीं मदीयां परमां सनातनी ।", तैत्तरीयशाखायाः श्रुतिश्च--

"ते ते धामान्युष्मसि गमध्ये गावो यत्र भूरिश्रृङ्गा अयासः।" अत्राह तदुरुगायस्य विष्णोः परमं पदमवभातिभूरेः। ते तद् ते तानि धामानि कुञ्जादीनि, गमध्ये प्राप्तुं उष्मसि कामयामहे। भूरेः रासोत्सवे बहुत्वेन प्रकटितस्य अयासः शुभरूपाः गावः, सामान्यतः गवामुक्ति। तत्र कियंति कुलानि तत्तन्नाम्ना प्रसिद्धानि। तानि तु इतिहाससमुच्चये--

"विपुले चंपके दामे भद्रे सुरभि मालिनि।
वसोर्द्धारे श्रिये नन्दे हंसे सर्वे वटस्रवे॥
पाटले लोहिते गौरि पिंगले सवले शुभे।
गोदावरि महागंगे सरस्वति सुहृत्प्रिये॥" -इत्यादि।

आगमे गोगणाष्टकं—"१-सुवर्णकपिला २-गौरपिंगला ३-रक्तपिंगाक्षी ४-गुड़पिंगला ५-वहुवर्णपिंगला ६-कृष्णपिंगाक्षा ७-खुरपिंगला ८-पुच्छपिंगला" इत्यादि। उक्तंच बृहत्गौतमीये-"गोलोकादागतैर्दिव्यै वेष्टितं गोगणाष्टकैरिति।" भविष्योत्तरे—

"नंदा सुभद्रा सुरभी सुशीला वहुला" इति नारदवाक्यं

पाद्मे रहस्याध्याये--

"भुवि गोविंदवैकुण्ठे तस्मिन् बृन्दावने नृप।
यत्र वृंदादयो भृत्याः सन्ति गोविंदलालसाः।
नित्यं मे मथुरां विद्धि वनं बृन्दावनं तथा।
यमुनां गोप कन्याश्च तथा गोपालबालकान्॥"

बृहत्वामने भगवद्वाक्यं--

"पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले।
बृन्दाबने भविष्यन्ति प्रेयस्यो रासमण्डले॥"

गोपालोपनिषदि--

"मथ्यते तु जगत्सर्वं ब्रह्मज्ञानेन येन वा।
तत्सारभूतं यद्यस्यां मथुरा सा निगद्यते॥"

"स एवाव्यक्तोऽनंतो नित्यो गोपाल एवाव्ययो मथुरायां स्थितिः सर्वदा मे भविष्यतीति।" तस्यामधिकृतः कृष्णरूपी पूज्यः सदा त्वयेति। तथा कृष्णोपनिषदि-"गोकुलं वनवैकुंठं तापसास्तत्र ते द्रुमाः।" वाराहे—

"मथुरायाः परं क्षेत्रं त्रैलोक्ये न हि विद्यते।
तस्यां वसाम्यहं देवि मथुरायां च सर्वदा॥"

एवं नियतस्थानत्वे सिद्धे। इयं मधुपुरी द्वादशरसेन पुष्टा रसतादात्म्यापन्ना कमलाकारा ऐश्वर्यादिवहिरंगवतः सर्वरसात्मकस्य श्रीकृष्णस्य नियतस्थानं। तत्र पंचधा विभागाः।

तत्रापि केवलरसरूपः पंच योजनात्मकः पद्म पत्रवत् श्रीवृन्दावनाख्यः एको विभाग, तदुक्तं वृहत्गौतमीये तृतीयपटले—

पंच योजनमेव हि वनं मे देहरूपकमिति॥

द्वितीयस्तु योजनपरिमितः राजधानीरूपः, तमेव सभा–मंडप–सिंहासनात्मकं वर्णयन्ति। तत्र सत्यलोकः छत्रं, श्रीनारायणाद्यवताराः आवरणत्वेन स्थिताः। तृतीये–द्वादशगव्यूत्यात्मके विभागे ब्रह्मरूद्रादयः। चतुर्थे–विंशतियोजनात्मके सर्वाणि तीर्थानि तत्तीर्थाविष्टातारश्च निवसन्ति। पंचमे विभागे–चत्वारिंशद्योजनात्मके इन्द्राद्यधिकारिणः। ततो वहिः प्राकृता इति सत्सर्गः। तत्र सर्वेषां वैष्णवानां सर्वोपि माथुरो मंडलः सुखात्मक एव।

रसज्ञानां तु श्रीवृन्दाबनमेव शुद्धरसरूपं अन्यत्तु वैभवमिश्रम्।

तत्र नित्यप्रियाः श्रीराधानुगामिन्यः तत्र षोडश सहस्रमित्येके, अष्टाधिकमित्यन्ये,अष्ट-लक्ष्य नियोज्य-सहिताः दशकोटय इत्यपरे, एक सप्ततिसहस्र ऋषयः। श्रुतय इति सर्वे अग्निकुमारा ऋषय इत्यपि। अपरिमिता इति सुरसज्ञा, प्रमदा-शत कोटिभिराकुलित इत्यागमोक्तेः। तत्र पंचस्वपि विभागेषु श्रीकृष्णस्य वैभवावस्थायाः प्राधान्यं। कुत्रचिद्रसमिश्रवैभवेन, कुत्रचिद् वैभवमिश्ररसेन,

कुत्रचिद्शुद्धवैभवेन, कुत्रचित् वांधवमिश्रवैभवेन । वैभवावस्थे श्रीकृष्णोऽवधि भूता परा या लक्ष्मीः तस्या अनुगतिः । तदंशभूता लक्ष्मीः श्रीनारायणादौ । तदुक्तं दशमे-"तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वः सरित् पाद-शौचं,विद्विट् स्निग्धाः स्वरूपं ययुरजितपरा श्रीर्यदर्थेऽन्ययत्नः। यन्नामा मंगलघ्नं श्रुतमथ गदितं यत्कृतो गोत्रधर्मः, कृष्णस्यैतन्न चित्रं क्षितिभर-हरणं कालचक्रायुधस्य"॥ आचार्यैर्व्याख्यातं-अजितपरा श्रीः कृष्णस्यैव, अजिता केनापि न जिता परा अवधिभूता श्रीः कृष्णस्यैव नान्यस्य, ततश्च वृन्दा-बनमेव स्थानावधिः तथा वृन्दाबनस्थ एव श्रीकृष्णोऽवधिः श्रीकृष्ण रसावधिः, श्रीराधैवेत्यादि सर्वमुपास्यरहस्यम् । तत्र प्रमाणं श्रुतादयः। ततः पंचमे विभागे प्रमाणं वायु पुराणे-वशिष्ट-दिलीप संवादे—

चत्वारिंशद्योजनानां ततस्तु मथुरा स्मृता ।
यत्र देवो हरिः साक्षात्स्वयं तिष्ठति सर्वदा ॥

चतुर्थे विभागे पाराशरवाक्यं—

"त्रिंशद्योजनविस्तारो मथुरायाश्च मंडलः । यत्र प्राणान् विमुच्यन्ति सिद्धा यांति परां गतिमिति ।" वाराहे-"विंशतिर्योज-नानां तु माथुरं मम मंडलम् ।" तत्रावरणे तीर्थानां तत्तदधिष्ठातृणां स्थितिः। यथा महाराजस्थानं खंड-मंडलेश्वरास्तदधिकारिणश्च सेवन्ते इति तद्वत्। वाराहे—

"सप्त द्वीपेषु तीर्थानि पुण्यान्यायतनानि च ।
मथुरायां गमिष्यन्ति प्रसुप्ते तु सदा मयि ॥

आदिवाराहे—

षष्टि कोटि सहस्राणि षष्टि कोटि शतानि च ।
तीर्थ संख्या तु वसुधे मथुरायां मयोदिता ॥
पृथिव्यां यानि तीर्थानि आसमुद्र-सरांसि च ।

मथुरायां गमिष्यन्ति मयि सुप्ते बसुन्धरे ॥
सप्त द्वीपेषु तीर्थानि पुन्यान्यायतनानि च ।
मथुरायां गमष्यन्ति सुप्ते चैव जनार्द्दने ॥

तृतीय विभागे—

"गव्यूति द्वादशमयी द्वादशारण्य-संयुता ।
तत्रापि मथुरादेवी सर्वसिद्धिविधायनी ॥

यत्त्वागमे--द्वात्रिंशद्वनं तत्तु श्रीवृन्दावनांतर्गतमेव । यथादशमे प्रययुस्तेऽविकावनमिति ।

"पशव्यं नवकाननं" व्याख्यातं नवानि अवांतराणि काननानि यस्मिन् । गौतमीये—"शाखामृगगणाकीर्णं नानामृगनिषेवितम् । द्वात्रिंशद्वनसंवीतं वैकुण्ठादतिसौख्यदमिति ।" तथा वृहद्गौतमीये च—"द्वात्रिंशद्वनराजीभि राजितं सर्वतो मुखं । गोलोकादागतै र्दिव्यै र्वेष्टितं गोगणाष्टकैरिति ।" द्वितीयविभागे,

आदिवाराहे-

इदं पद्मं महाभागे सर्वेषां मुक्तिदायकम् ।
कर्णिकायां स्थितो देवि केशवः क्लेशनाशनः ।
कर्णिका योजनं चात्र सदाहं तत्र संस्थितः ॥"

पंचमे विभागे--

वृन्दाबनं द्वादशमं वृन्दया परिरक्षितम ।
मम चैव प्रियं भूमे सर्वपातकनाशनम् ॥

गौतमीयतन्त्रे पंचशत्तमे पटले गौतमं प्रति नारदस्य वृत्तांतोक्तिः

"निष्क्राम्य परमाश्चर्यमपश्यंतत्प्रदर्शितम् ।
मत्स्य कूर्म-वराहानां नृसिंहस्योग्रतेजसः ॥
हयग्रीवतनोश्चैव लीलादाशरथेस्तथा ।
ततो मां पार्षदवरः सु-सौम्यमधुराकृतिः ॥
कृष्णलीलां दर्शयितुमनयन् निभृते क्वचित् ।

प्रवेशयन् मां प्रथमं पुरीं द्वारवतीं मुदा ॥
तत्राहं दृष्टवान् कृष्णं तत्तल्लीलाविहारिणम् ।
ततो मामनयन् रम्यां पुरीमैश्वर्यरूपिणीम् ।
उवाच मथुरेयं वै सर्व-वेदेषु गोपिता ।
तां प्रविश्य रहोलीला दृष्टाश्चर्यमयी मया ॥
ततो मामनयज्ज्ञातमहास्नेहो न ते मयि ।
गोकुलं गोपगोपीभिः गोवत्सैश्च मनोहरी ॥
तत्र लीला मया दृष्टा कृष्णस्याद्भुत कर्मणः ।
ततो वनं द्वादशकं श्रीबृन्दाबनमुख्यकम् ॥
ब्रह्मणा शंकरेणापि न दृष्टं रमयापि यत् ।
तन्मे विक्रीडितं वत्स ब्रजबालाकदंबकैः ॥"

ततश्चेयं रीतिः, प्रथमं नारायणावृत्तिः, ततो मत्स्यकूर्माद्यवतारैः, ततो द्वारावती, ततो मथुरा, ततो वनानि , ततो वृन्दाबनं । द्वारकायोध्यादयस्तु काम्यवने प्रसिद्धा एव । तत्रोक्तवद्धमानेष्वियं प्रक्रिया । श्रीराधयावृतः श्रीकृष्णः श्रीकृष्णेनावृता श्रीराधा । कदंवाशोक-कल्पद्रुमे रासमण्डले वा । ततः नित्यसखीभिः, ततो नित्य नियोज्याभिः, ततः उपासनासिद्धाभिः, ततो बृन्दया ततः श्रीवृन्दाबनेन तत एकादशबनेन, ततस्तु अधिकृतदेवैः। ततस्तत्तत्तीर्थैः, तत्तदधिकृतदेवैश्च । तत इन्द्रादिभिर्वैभवपरिकरैः, ततः प्रकृतिकार्येण । प्रकारभेदस्तु सद्गुरोर्ज्ञेयः । तत्रैश्वर्यपरिवारः मथुरायां, रसपरिवारस्तु श्रीबृन्दाबने । यद्यपि भगवानेक एव अथ चेश्वरपरिवृत्तिरीश्वरस्य न संभवति तथाप्यलौकिकेऽर्थे वेदादिः प्रमाणं यथेश्वरस्यासने कूर्मे परमात्मादेः विनियोगः तथैवात्रापि तर्कं विना निश्चेतव्यम । रसज्ञास्त्वेवं समादधते, यथैक एव योगी तस्यानेकानि शरीराणि युगपदेव राज-सेवकादि-शरीरैः भोगान् भुञ्जतोऽपि न शरीरेषु समता तथैवेश्वरेऽपीति न किमप्यथासमंजसता । तत्रोदाहृतयः । तत्र त्रैलोक्यसंमोहनतंत्रे :-

"ध्यायेद्‌वृन्दावने सम्यक् सिद्धचारणवेष्टिते ।
गो-गोप-गोपिकाक्रांते कल्पपादपशोभिते ॥
हेमपद्मोपरि स्वैरं नृत्यगं वनमालिनम् ।
ध्यात्वैवमर्चयेत्पीठे पूर्ववत्पुरुषोत्तममिति ॥"

स्वायंभुवागमे पञ्चाशीतिपटले—

ततः पीयूषलतिकां नानाभां सु रसात्मकां ।
सर्वत्तु सुखदां स्वच्छां सर्वजंतुसुखावहाम् ॥
नीलोत्पलदलश्यामां वायुना चलितां मृदु ।
वृन्दाबनपरागैस्तु-वासितां कृष्णवल्लभाम् ॥
सीम्नि कुञ्जतटीं योषित्क्रीडामंडपमध्यगाम् ।
कालिंदीं संस्मरेद्धीमान् सुवर्णतटपंकजम् ॥
नित्यनूतनपुष्पादिरंजितं सुखसंकुलम् ।
स्वात्मानन्दसुखोत्कर्षशब्दादिविषयात्मकम् ॥
नानाविचित्रविहगध्वनिभिः परिरंभितम् ।
नानारत्नलताशोभिमत्तालिध्वनिमंद्रितम् ॥
चिंतामणिपरिछिन्नज्योत्स्नाजालसमाकुलम् ।
सर्वत्तु-फल-पुष्पाढ्यं प्रवालैः शोभितं परि ॥
कालिंदीकूलसंसर्गिवायुना कंपितं मुहुः ।
वृन्दाबनं कुसुमितं नानावृक्षविहंगमैः ॥
संस्मरेत्साधको धीमान् बिलासैकनिकेतनम् ।
एकीभावं द्वयोर्यत्र वृक्षयोर्मध्य देशतः ॥
तदधश्चिंतयेद्देवि मणिमंडपमुत्तमम् ।
त्रिलोकीसुखसर्वस्वं सुपत्रं केलिबल्लभम् ॥
तत्र सिंहासने रम्ये नानारत्नमये सुखे ।
स्वमानाधिकमाधुर्यकोमले सुखसंस्तरे ॥
धर्मार्थकाममोक्षाख्यचतुः पादैर्विराजिते ।

ब्रह्म-विष्णु-महेशानां शिरोभूषणभूषिते ॥
तत्र प्रेम-भराक्रांतं किशोरं पीतवाससम् ।
ततो निर्वाणपदवीं मुनीनामूर्द्ध्वरेतसाम् ॥
स्मरेत्तु परमव्योम यत्र देवाः सनातनाः ।
ततोऽनिरुद्धलोकं च प्रद्युम्नस्य यथा क्रमम् ॥
संकर्षणं तथा लोकं वासुदेवस्य च स्मरेदिति "।

ध्यानत्वेनोक्तं । ततस्त्वेवं वर्णयन्ति साम्प्रदायकाः । रहस्य-स्थलाद्ब्राह्ममंडले तत्तद्देवानां स्थितिः । उक्तं च वाराहे—

"एका वराहसंज्ञा च तथा नारायणी परा ।
वामना च तृतीया वै चतुर्थी लांगली शुभेति ॥"
तत्रैव-"रक्षार्थं तु मया दत्ताः दिक्पालास्तु वरानने ।
लोकपालाश्च चत्वारः तीर्थं रक्षंति ये सदेति ॥"

त्रैलोक्यसंमोहनतंत्रे नारदवाक्यं—

तत्र नारायणो देवः सर्वदेवगणैः सह ।
लक्ष्म्या च वसते नित्यं सर्वाभिश्चैव सिद्धिभिः ॥

तथा गोपालोपनिषदि—"बृहन् बृहद्बनं, मधो र्मधुवनं ताल-स्तालवनं, काम्यः कामवनं, बहुलो बहुलाबनं, कुमुदं कुमुदवनं, खदिरः खदिरबनं, भद्रो भद्रवनं, भांडीर इति भांडीरवनं, श्रीबनं लौहबनं, बृन्दाया: बृन्दाबनं ।

एतैरावृता पुरी भवति । तत्र तेष्वेव गहनेष्वेवं देवा मनुष्या गंधर्वा नागाः किन्नराः गायन्ति नृत्यंतीति" । "तत्र द्वादशादित्या एकादश रुद्रा अष्टौ वसवः, सप्त मुनयः ब्रह्मा नारदश्च पंच विनायकाः । द्वे वने स्तः कृष्णवनं भद्रवनं तयोरन्तः द्वादश वनानि पुण्यानि पुण्यतमानि तेष्वेव देवास्तिष्ठंति, सिद्धाः सिद्धिं प्राप्ताः, तत्र रामस्य राममूर्त्तिः, प्रद्युम्नस्य प्रद्युम्नमूर्तिः, अनिरुद्धस्ये-त्यनिरुद्धमूर्त्तिः, कृष्णस्य कृष्णमूर्त्तिः बनेष्वेवं मथुरास्वेवं द्वादश

मूर्त्तयो भवन्ति । एकां हि रूद्रा यजंति द्वितीयां ब्रह्मा यजति, तृतीयां हि ब्रह्मजा यजन्ति, चतुर्थीं मरूतो यजन्ति । पंचमीं विनायका यजन्ति, षष्ठमां वसबो यजन्ति, सप्तमी मृषयो यजन्ति, अष्टमीं गंधर्वा यजन्ति, नवमीं अप्सरसो यजन्ति, दशमी हि अन्तर्द्धाने तिष्ठतीति ।" "सहोवाचाब्जयोनिरव्यक्तानां मूर्तीनां प्रोक्तानां कथं वावरणानि भवन्ति । सहोवाच तं हि वै नारायणो देवः आद्या अप्यव्यक्ता द्वादश मूर्त्तयः सर्वेषु लोकेष्विति ।" ततश्चायमर्थः संपन्नः श्रीमथुरामण्डलं द्विविधं पद्मात्मकं मण्डलं पद्मवहिर्मंडलं च, पद्मात्मके मंडले द्वादश बनानि अत एव लोकपरंपरया यात्रा तथैव वहिर्मंडलं लोकपालादिभिः रक्षितं, ततश्च तर-तम भावेन मण्डलेषु विशेषः । तथा हि चत्वारिंशद्योजनात्मकाद्विंशतियोजनात्मकः श्रेष्ठः, ततो द्वादश गव्यूत्यात्मकः, ततोऽपि योजनपरिमिताद्धं चन्द्राकृतिरूपः मथुरास्वरूपः, ततोऽपि रहस्यरूपेणोच्यमाने पद्मपत्रात्मकः लोक-वेद-प्रसिद्धया विंशति-क्रोशरूपः सर्व रसावधि स्थानं श्रीवृन्दाबनमेव, तत्र श्रीराधाकृष्णौ स्वरूपेण तिष्टतोऽन्यत्र तु अंशेन । तथैवोपनिषदि—"विज्ञान-घनानन्दघन-सच्चिदानंदैकरसे भक्तियोगे तिष्टतीति ।" "तस्यामधिष्ठितः कृष्ण-रूपी पूज्यस्त्वया सदा । चतुर्द्धा वास्याधिकारि-भेदत्वेन यजन्ति-मामिति ।" अतो जायतेऽधिकारिभेदेन मूर्त्तिभेदः ।

तदुक्तमादिपुराणे

"अहमेव परं रूपं नान्यो जानाति कश्चन ।
जानाति राधिका पार्थ अंशानर्चंति देवताः ॥

ब्रह्मविद्यापि श्रीकृष्णरतिं विना अपूर्णैव । त्रैलोक्यसंमोहनतंत्रे-ब्रह्मविद्योक्तिः—

"ब्रह्मानन्देन पूर्णाहं ज्ञान-विज्ञानतृप्तधीः ।
तथापि शून्यमात्मानं मन्ये कृष्णरतिं विनेति ॥"

तथा प्रथमे—

तथापि वत मे दैह्यो ह्यात्मा चैवात्मना विभुः ।
असंपन्न इवाभाति ब्रह्मवर्चस्य सत्तमः
तस्यैव खिलमात्मानं मन्यमानस्य खिद्यतः ॥
कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम् ।

नारद उवाच—

जिज्ञासितमधीतं च ब्रह्म यत्तत्सनातनम् ।
तथापि शोचस्यात्मनमकृतार्थ इव प्रभो: ॥
सनातनं ब्रह्म अधीतं अधिगतं प्राप्तमित्यर्थः ।

एवं च नियतस्थानत्वे सिद्धे अस्मिन्नेव ब्रह्मांडे तत्रापि भरतखंडे इदमेव श्रीवृन्दाबनं नियत-स्थानं, ब्रह्मांडांतरे तु नेतिज्ञेयं । अन्यथा वत्सहरणलीलायां अनेकनारायणतदुपासकब्रह्मांडदर्शनवत्, श्रीकृष्णवृन्दाबनयोरपि दर्शनं स्यात् । ततश्चेषीकनिष्कर्षणन्यायेन सर्वावरणापोहेनैव श्रीकृष्णमाधुर्यप्राप्तिः । आवरणानि वर्णाश्रमधर्मफलं, २-निवृत्तिधर्मफलं ३-निर्गुणब्रह्मत्वं ४-परमात्मत्वं ५-भगवत्त्वं ६-षडैश्वर्यं एतदावरणमुल्लंघ्य श्रवणकीर्त्तनादौ प्रवृत्तः मधुररसभक्तावधिकारी तस्य फलं श्रीकृष्णः, भक्ति रतिस्ततः श्रीराधेत्यादि सर्वावधिः । अणिमाद्यैश्वर्यै गूढं श्रीकृष्णं, तत्तदपोहेन रसज्ञभक्तकृपया प्राप्तरसमार्गेण प्राप्नुयात् यथात्मस्वरूपे । उक्तं च षष्ठे— "मनीषिणोंतर्हृदि संनिवेशितं स्वशक्तिभि र्नवभिश्च त्रिवृद्धिः । वह्निं यथा दारुणि पांचदश्यं मनीषया निष्कर्षंति गूढमिति ।" ततश्च रसात्मकभक्त्युपयोगिव्यतिरिक्तसर्वापोहेन श्रीकृष्णानुसंधानेन रसात्मकभक्तेराविर्भावः यद्यपि शास्त्रे नानाविधोपासना, तथापि गुरु-उपदेशपरंपरया ज्ञेया । तथा हि स्कांदे—

"केशवार्चा गृहे यस्य न तिष्ठति महीपते ।
तस्यान्नं नैव भोक्तव्यं अभक्ष्येण समं स्मृतमिति ॥"

मानसी पूजा च विहिता । तत्रापि पीठपूजावरणपूजायां च वहवः परिवाराः अपेक्षितास्तान् सर्वानुपेक्ष्य रसपरिवारानेव सेवयेत् । तत्र पीठपूजायां अधर्माज्ञानादिकं रजः सत्व-तमांसि अग्नि-सूर्य-मंडलानि च ।

आवरणपूजयामपि श्रीवसुदेवदेवकीरूक्मिण्यादीनि, ततश्चेतत् सर्वं विचार्य द्वारकायां तत्रापि ऐश्वर्यं सर्वं तथैव श्रीवृन्दाबने तत्रापि शुद्धोज्वलरसे रसात्मके यदि वानैनेव चतुरावृत्तिः। रात्रौ चेन्मन्मथाक्रांतमानसं देवकीसुतमित्यादिना सर्वावरणत्यागेनैव तथोक्तेः। स्वयंभुवागमे च—अधर्मादच्चतुष्कं तु अश्रेयसि नियोजनमिति । मानसीपूजा तु रसज्ञस्य न हृदय पीठस्य च कुत्राप्यनिरूक्ते, वृन्दाबनपीठस्यैवोक्तेः । मानसेपि सेवने बृन्दाबन एव वहिरिंद्रियै र्न तु हृदये। वहिरिंद्रियैरेब बिलासास्वादात् । ततश्च श्रीवृदारण्ये अविकृतरूपेण स्थितत्वात्सदा वृन्दाबन एव स्थितं श्रीकृष्णं परिचरेत् । मथुराद्वारकागमनं तु नास्त्येव, श्रीभागवते यद्यपि द्वारका-कुरूक्षेत्राक्रूरागमनविरहोक्तिप्रभासादूयुक्तिस्तु शास्त्रप्रक्रिया वहिर्मुखानां वैराग्यार्था भक्तिरससंगोपनार्था वा । श्रीकृष्णलीला नित्या । ज्ञानेच्छाप्रयत्नवत् क्रियायाः नित्यत्वात् । तथा च श्रुतिः । विष्णोः कर्माणि पश्यत यतो व्रतानि पश्यत यतो व्रतानि पश्यसे तद्विष्णोः परमं पदमित्युक्त्वा सदा पश्यन्ति सूरय इत्यादिना नित्यत्वमेवायाति ।
गौतमीये नारदवाक्यं—

निष्क्रम्य परमाश्चर्यमपश्यं तत्प्रदर्शितम् ।
मत्स्य-कूर्म-वराहाणां नृसिंहस्योग्रतेजसः ॥
हयग्रीवतनोश्चैव लीला दासरथेस्तथा ॥

त्रैलोक्यसंमोहन तंत्रे—

"सर्वेषां गोपगोपीनां रतिं नन्दसुते परम्।
दृष्ट्वा मुनिवरः सर्वान् मनसा प्रणनाम ह।
कृष्णलीलां दर्शयितुमनयन्निभृते क्वचित् ॥

वस्तुतस्तु न वयं सर्ववाक्यार्थानुष्ठातारोऽपितु कियतां। तथाहि रुद्रयामले—

भुजाद्वययुतः कृष्णो न कदाचिच्चतुर्भुजः।
गोप्येकया युतस्तत्र परिक्रीडति सर्वदेति ॥

स्कांदे प्रभासखण्डे—

"चंद्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृताः।
संपूर्णमंडला तासां मालिनी षोडशी कला ॥"

यथा चन्द्रिकारूपां कलां विना न चंद्रत्वं तथा श्रीराधां विहाय न श्रीकृष्णत्वमिति भावः। तथा च ऋग्वेदे। "राधया माधवो देवो माधवेनैव राधिका। विभ्राजंते जनेष्वा" इति। रुद्रयामले रुद्रगौरीसंवादे—

"यत्कुसुमं यदा मृग्यं यत्फलं च वरानने।
तत्तदैव प्रसूयन्ते वृन्दावनसुरद्रुमाः ॥
"वीथ्यां विथ्यां निवासोऽधरमधुसुवचस्तत्र संतानकाना—
मेके राकेंदुकोट्यातपविशदकरास्तेषु चैके कमंते।
रामे रात्रे विरामे समुदिततपनद्योतिसिंधूपमेयाः,
रत्नांगानां सुवर्णांचितमुकुररुचस्तेभ्यः एके द्रुमेन्द्राः ॥

अस्यार्थः-हे रामे पार्वति! हे अधरमधुसुवचः, अधरमधुवत् सुवचो यस्या तादृशे! तत्र श्रीवृन्दावने वीथ्यां वीथ्यां संतानकनां कल्पवृक्षाणां निवासः, अथ च तेषु संतानकेषु एके राकेंदुकोट्यातपविशदकराः विद्यंते, तेष्वपि एके कमंते राजंते। एके तु रात्रेर्विरामे प्रातःकाले समुदिततपनद्योतिसिंधूपमेयाः सन्ति। तन्नागानां तेषां

मध्ये एके सुवर्णाचितमुकुररूचः सन्ति, अत्र तु सर्वैः सर्वकुसुमादिप्राप्तिः। सर्वसंम्पत्तिः स्वाभाविकी नत्वैश्चर्यादिना। यथा काचिद्दाडिमी सर्वतुषु फलपुष्पादियुक्तैव तिष्टति तद्वज्ज्ञेयम्। ब्रह्मसंहितायाम्।

"चिंतामणिप्रकरसद्मसु कल्पवृक्ष,
लक्षावृतेषु सुरभीरभिपालयंतम्।
लक्ष्मी-सहस्र शत-संभ्रम-सेव्यमानं
गोविंदमादिपुरूषं तमहं भजामि ॥"

वौधायनप्रायश्चित्तप्रकरणे—

"गोविंदं मनसा ध्यायेत् गवां मध्ये स्थितं शुभम्।
वर्हापीडकसंयुक्तं वेणुवादनतत्परम् ॥
गोपीजनैः परिवृतं वन्यपुष्पावतंसकमिति ॥"

गोपालोपनिषदि—

"द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम्।
गोपगोपीगवां वीतं चिंतयेच्चेतसा विष्णुमिति ॥"

आगमे—

"वत्सैर्वत्सतरीभिश्च सदा क्रीड़ति माधवः।
वृन्दावनांतरगतः स रामो वालकैर्वृत" इति।

ब्रह्मसंहितायाम्—

श्रियः कांताः कान्तः परम-पुरूषः कल्पतरवो,
द्रुमाः भूमिश्चिंतामणिगणमयी तोयममृतम्।
कथा गानं नाट्यं गगनमपि वंशी प्रियसखी,
चिदानन्दं ज्योतिः परमपि तदा स्वाद्यमपि व ॥
स यत्र क्षीराब्धिः सरति सुरभीभ्यश्च सुमहा,
निमेषार्द्धाख्यो वा व्रजति न हि यत्रापि समयः।

भजे श्वेतं द्वीपं तमहमिह गोलोकमिति यं,
विदन्तस्ते सन्तः क्षितिविरलचाराः कतिपये ॥

अनेन वेदवेदांगैर्यद्वस्तुत्वेनोच्यते तच्छ्रीकृष्णस्य वैभवं न तु स्वरूपं। कान्ताः श्रीराधाद्याः श्रियः वैकुण्ठस्था लक्ष्मीः श्रीर्न भवति। श्रीकृष्णवैभवरूपनारायणाश्रयत्वात् । कांतः श्रीकृष्ण एव परम-पुरुषः न तु नारायणादिः, तेषामंशत्वात्। द्रुमाः श्रीवृन्दावनवृक्षाः कल्पतरवः नत्वन्यः। भूमिः श्रीवृन्दावनसंबंधिनी चिंतामणिः चिंतितफलदाता मणिः,तत्राप्येकचिंतामणिरूपा न किन्तु समूहमयी, तोयं श्रीवृन्दावनसंबंधि, तदेवामृतं न तु मोक्षादिः। कथा व्रजौ-कसां परस्पर-संभाषणमेव गानं, नादब्रह्मानन्दात्मकं, नाट्यं नृत्यं व्रजौकसां गमनमेव। यत्र वंश्येव प्रियसखी, ज्योतिः व्रजस्थ-दीपादिः चिदानन्दं तत्तु ब्रह्मणोऽपि परं श्रेष्ठं आस्वाद्यं च इन्द्रियैरास्वाद्यं, वृन्दावनौषध्यादिः ज्योतिरिति केचित्। यत्र गावः एव सुरभ्यः ताभ्यः यः महान् प्रवाहरूपः सरति दुग्ध-रूपः स एव क्षीराब्धिः, यत्र श्रीवृन्दावने निमेषार्द्धोऽपि कालः षोडश-वर्षात्मके न व्रजति न तिरोधत्ते, हि निश्चयेन तं व्रजं भजे, कीदृशं? श्वेतं शुभ्रं, पुनः कीदृशं? द्वीपं द्विर्गता आपः यमुना मानसगंगा लक्षणा यत्र तत् इह भरतखण्डे वृन्दावने गोलोकं यं विदन्तः ये जानन्तः ते एव सन्तः, ते तु कतिपये अल्पा श्रीकृष्ण-कृपां बिना न ज्ञायत इति भावः। यदि अन्यः स्वर्गस्थगोलोकः स्यात्तर्हि श्रीवृन्दावनवर्णनं न स्यात्-इति भावः। गुरुकृपया सर्वं वेद्यम्। तदुक्तं बाराहे—

"वसन्ति मथुरायां ये विष्णुरूपा हि ते खलु।
अज्ञानास्तान्न पश्यन्ति पश्यन्ति ज्ञानचक्षुषेति ॥"

किं च श्रीकृष्णस्य चन्द्ररूपत्वे निर्णीते कलास्थानीयाश्च व्रज-देव्यः ततोऽपि न विरहः। तथा हि स्कांदे प्रभासखंडे—

ततो गोप्यो महादेवि याः विद्याः षोडश स्मृताः ।
तासां नामानि ते वक्ष्ये तानि स्वैकमनाः शृणु ॥
१ लंबिनी २ चंद्रिका ३ कान्ताऽ ४ क्रूरा ५ शांता ६ महोदया।
७ भाषिणी ८ नंदिन्य ९ शोका १० सुपूर्वविमला ११ ऽक्षया ॥
१२ शुभदा १३ शोभना १४ पुण्या १५ हंसींशीता १६ कला क्रमात् ।
चंद्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृताः ।
संपूर्णमंडला तासां मालिनी षोडशी कला ॥
प्रतिपत्तिथीमारभ्य संचरंत्यासु चंद्रमाः ॥
षोडशैव कलायास्तु गोपीरूपा वरानने ॥
एकैकशस्ता संभिन्नाः सहस्रेण पृथक् पृथक् ।
एवं ते कथितं देवि रहस्यं रसवैभवम् ।
यः एवं वेद पुरुषः स ज्ञेयो वैष्णवो बुधैरिति" ॥

अयमर्थः । अमावस्यायां हंसशीता नाम्नी सखी अन्यसखीसहस्रसंयुक्ता श्रीराधाकृष्णयोः अभिसारादिरसं पुष्णाति । ततः प्रतिपदि सहस्रसखीसंयुक्ता लंबिनी नाम्नी रासरसं पुष्णाति । एवं द्वितीयायां चंद्रिका, तृतीयायां कान्ता, चतुर्थ्यां अक्रूरा, पंचम्यां शान्ता, षष्ठ्यां महोदया, सप्तम्यां भोषिणी, अष्टम्यां नंदिनी, नवम्यां अशोका, दशम्यां सुविमला, एकादश्यां अक्षया, द्वादश्यां शुभद्रा, त्रयोदश्यां शोभना, चतुर्दश्यां पुण्या, पूर्णमास्यां मालिनी । एतास्तु षोडष सख्यः विलासं पुष्णांति ॥ भविष्योत्तरे युधिठिर उवाच। "प्रतिपत्क्रमयोगेन विहितस्य च या तिथिः । देवस्य तस्यां यत्कार्यं तदशेषेण कीर्त्तयेति" किंच श्रीराधाया श्रीवृन्दावनाधिकृतत्वादन्यत्र गमनं न, तथा श्रीकृष्णस्यापि चंद्ररूपत्वात् । गमनोक्तितु रससंगोपनार्था । वाराणस्यां विशालाक्षी बिमला पुरुषोत्तमे । रूक्मिणी द्वारावत्यां तु राधा वृन्दावने वने ॥
यथा वाराणस्यां विशालाक्षी सती तिष्टति किमर्थं अवने रक्षणे तथा वने वृन्दावन अवने रक्षणार्थं राधा वृन्दा श्रीराधायाः श्रीवृन्दा

नियोऽस्येत्यर्थः। केचित्तु यथा रुक्मिणी-आदयः द्वारकादौ सर्वदा तिष्टन्ति तथा श्रीराधा वृन्दावने इति व्याचक्षते। पाद्मे "वृन्दावनाधिपत्यं च दत्तं तस्याः प्रतुष्यता। कृष्णेनान्यत्र सा देवी राधा वृन्दावने वने॥

यथा वाराणस्यादिषु नित्याधिकृता देव्यः द्वारकायां श्रीरूपिणी रुक्मिणी, ननु देवी वृन्दावने नित्याधिकृता राधा यथा तासां तत्र नित्या स्थितिः तथैतस्याः तत्र क्षेत्रतत्त्वं जानन्ति। तदनुग्रहादेवान्यासां क्षेत्रतत्त्वज्ञान -प्राप्तिश्चेति न तासामन्यत्र गमनम्।

रागोपासनयैवायमर्थः स्फुरति नान्यथा। नारायणव्यूहस्तवे--

"पति-पुत्र-सुहृत-भ्रातृ-पितृवन्मित्रवद्धरिम्।
ये ध्यायंति सदोद्युक्तास्तेभ्योऽपीह नमो नमः॥

नारदपंचरात्रे—

"कदा गंभीरया वाचा श्रिया युक्तो जगत्पते॥
चामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यतीति"॥

महाकूर्मे—

"अग्निपुत्राः महात्मानस्तपसा स्त्रीत्वमापिरे।
भर्त्तारं च जगद्योनिं वासुदेवमजं विभुमिति"॥

तस्माद्रसज्ञभक्तैः आगम-पुराणवेदानां कियद्वाक्यान्यवलंब्य विश्वास-श्रद्धया कियतोऽपि वैष्णवानवलंब्य श्रीराधाप्रियत्वेन नित्यवृन्दावनविलासवत्त्वेन श्रीकृष्णः सेव्यः। नहि सर्वे सर्ववाक्यार्थानुष्टातारः।

इदानीं श्रीकृष्णस्वरूपं विवृण्वन् द्वादश परिवाराणां प्राधान्यं निरूप्यते। तत्र श्रीराधाप्रियत्वेनोपासने अवधिभूतसुखाविर्भावः। प्रकारांतरेण तु ततो न्यूनता ज्ञेया। तथा हि ब्रह्मत्वेश्वरत्वादिना भजने श्रीकृष्णप्राधान्यं, बन्धुत्वादिना मिश्रभजने समता च, ईश्वरत्वादिनिरपेक्षभजने द्वादश भक्तानामेव प्राधान्यं, रसरूपभक्तेश्च

श्रीकृष्णस्य गौणता समता वा। यथा लक्ष्मीभजने श्रीनारायणस्यांगता। तदुक्तं सारदातिलके लक्ष्मीपूजने अंगता—

आसीना सरसीरुहे स्मितमुखी हस्तांबुजे बिभ्रती,
दानं पद्मयुगाभये च वपुषा सौदामिनीसंनिभा।
मुक्तादामविराजमानपृथुलोत्तुंगस्तनोद्भासिनी,
पायाद्वः कमला कटाक्षविभवैरानन्दयन्ती हरिम्॥

इति उक्ता। आवरणपूजने—"वासुदेवं संकर्षणं प्रद्युम्नमनिरुद्धकम्। श्रीधराख्यं हृषीकेशं वैकुण्ठं विश्वरूपिणम्। वासुदेवं संकर्षणं प्रद्युम्नमनिरुद्धकम्। दलमूलेषु संपूज्य यत्र मध्येषु संयजेदिति।" तथा जानकीमंत्रं प्रधानं अङ्गं च। तदुक्तं रामार्चनचंद्रिकायां। "सीतामन्त्रश्च कथितः स्वतन्त्रोंगपरोपि च।" सनत्कुमारगोपालकल्पे— "रात्रौ पीताम्बरधर-कृष्णं सम्यग्विचारयेत्। रासमंडल-मध्यस्थं सर्वभूतमनोहरम्। आराध्य राजते पात्रे पयः शुद्धं निवेदयेत्।" रुद्रयामले-अनुक्रममालायां गोपालकल्पे मन्त्रोद्धारानन्तरं—

"चिंतयेद्राधिकां गोपी-गोपगोकुलसंकुलाम।
द्विनेत्रां द्विभुजां तन्वीं नानालंकारभूषिताम्॥
प्रसन्नवदनां गौरीं इति वेष धरेण च।
लीलावतीं भोगवतीं राधिकां साधिकां तथा॥
माधवीं ललितां गौरीं विजयां चाग्रतो यजेत्।"

एका दशमी काचित्सखी। "राधानुराधा सोमाभा ता एका दशमी तथे"त्यादौ तथोक्तेः। आवरणपूजायां सिद्धगोपालः, कामराजगोपालः, मन्मथगोपाल इत्यादयः आवरणपूजायामुक्ताः। अतः जन्मादौ श्रीराधायाः स्वातंत्र्येणापि सेवनम्। दक्षिणामूर्तिसंहितायां महालक्ष्मीपूजावरणाष्टदले—अनुराग-संवाद-विजय-वल्लभ-मद-हर्ष-बल-तेजयः अष्टदिक्पालान् प्रपूजयेत्। सारदायां च—

अनुरागं च संवादं विजयं वल्लभं मदं ।
हर्षं बलं च तेजश्च लोकानार्थात् प्रपूजयेत् ॥

रुद्रयामले गोपालतन्त्रे—

"स्मरेद्वृन्दाबने रम्ये नीपमूले जनार्दनम् ।
गोष्ठमध्ये गवां धूलिजालधूसरमूर्द्धजमिति ॥"
तथा ता नायिकाः पूज्याः वसुपत्रेषु पूर्ववत् ।
पीताम्बरधरा सौम्याः परपद्माश्रया प्रियाः ॥

दक्षिणामूर्त्तिसंहितायां लक्ष्मीकल्पे—

"विभूतिरुन्नतिः कांतिः सृष्टिः कीर्त्तिश्च संनतिः ।
पुष्टिरुत्कृष्टि ऋद्धिश्च शक्तयः परिकीर्त्तिताः ॥"

तत्रैव रुद्रवाक्यं पार्वतीं प्रति-"कामाद्याकर्षिणी नित्या बुद्ध्याकर्षणिका तथा । अहंकाराकर्षिणीका शब्दाकर्षणिका तथा। रसाकर्षणिका देवि गंधाकर्षणिका तथा । चित्ताकर्षणिका तद्वद्धैर्याकर्षणिका प्रिये । नामाकर्षणिका चैव पराकर्षणिका तथा। अमृताकर्षिणी चैव स्मृत्याकर्षणिका प्रिये । शरीराकर्षिणी नित्या प्रज्ञाकर्षणिका ततः ।

एता नित्यकला देवि रासमंडलमध्यगा ।
नैवेद्यं षट्रसोपेतं कामधेनुपवित्रकम् ॥
दत्वा कर्पूरसहितं तांबूलं परिशक्तये ।
वसुपत्रेन वाज्येन पूरितां नवद्वीपिकां ॥
भ्रामयेत् रत्नसहितं वृत्त्यावृत्त्या तु मस्तके ।
अनङ्गरूपा चानंगमदनानंगमन्मथा ॥
अनंगकुसुमा पश्चादनंगमदनांतरा ।
अनंगशिशिरा चैव तथा चानंगमेखला ॥

अनंगात् नखाप्यष्टदलेषु क्रमतो ईश्वरत्वादि धर्म निरपेक्ष-भजनं रसरूपा भक्तिः । मिश्रभजने मिश्रा भक्तिः । तर्हि श्रीकृष्णे

ईश्वरत्वादयो न को ब्रूते नेति किंतु ईश्वरत्वादयो धर्माः नित्या उपलक्षणत्वेन स्थिताः न तु स्वरूपे प्रविष्टाः। के ते धर्मा शुद्धेश्वरत्वं ब्रह्मस्थत्वं, निर्द्धर्मकत्वं, अक्षयत्वं, अदाह्यत्वं, अक्लेद्यत्वं कर्मफलदातृत्वं, सर्वज्ञत्वं, सर्वेश्वरत्वं, सर्वात्मकत्वं, निर्लेपत्वं, निर्विकारत्वं,प्रवर्त्तकत्वं सर्वकर्तृत्वं,सर्वनियंतृत्वं, अशरीरत्वमित्यादयो धर्माः उपलक्षणत्वेन तटस्थाः न तु स्वरूपे प्रविशन्ति। तथा हि एक एव भक्तिरसः द्वादशांगयुक्तः द्वादश भक्ताश्रयः।

"शान्ते ब्राह्मण एवस्यात्प्रीते दासः प्रकीर्त्तितः।
प्रेयसि स्युः सखायो हि यशोदा वत्सले स्मृता।
मधुरे राधिका ज्ञेया हास्ये स्याद्विकृतांगकः।
सखीयूथोऽद्भुते ज्ञेयो वीरे चाणूरगो-बृषाः॥
करुणे वृक्ष-वत्सादिः जटिलाद्यास्तु रोद्रके।
गोवर्द्धनोऽभिमन्युश्च भयानक उदीरितौ॥
तपस्विन्यादयो ह्यत्र बीभत्से परिकीर्त्तिताः।
व्रजस्था नितता ज्ञेया आलंवनविभावकाः॥"

तत्र द्वादशालंबनेषु श्रीराधैव श्रेष्ठा सर्वमुख्या च, श्रीकृष्णस्य मुख्यत्वेपि ईश्वरत्वादिधर्माश्रयत्वेन न्यूनता। श्रीराधायाश्चेश्वरत्वादि धर्माभावात् मधुररसे मुख्यता। ततश्च श्रीराधाप्रियत्वेन श्रीकृष्णः सेव्यः तदा पूर्णभक्तिरसता, तथैव दशाक्षरादौ प्रतीतेः। श्रीगोपीवल्लभत्वेन श्रीकृष्णोक्तेः द्वयाधिकारं बिना भक्त्यभावात्। तदुक्तं पाद्मे त्रिंशेऽध्याये उत्तरखण्डे --

"मन्त्ररत्नद्वयं नाम प्रपत्तिः शरणागतिः।
कुलजो वा तपस्वी वा वेदवेदांगपारगः॥
यज्ञ-दानपरो वापि सर्वतीर्थोपसेवकः।
व्रती वा सत्यवादी वा यतिर्वा ज्ञानवानपि॥
द्वयाधिकारी न भवेत् प्रयत्नेन विवर्जयेत्।

ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथेतराः ॥
तस्याधिकारिणः सर्वे मम भक्ता भवन्ति ये ।
द्वयाधिकारिणः सर्वे याताः विष्णोः परं पदम् ॥
द्वयोपदेशपूर्वेण सर्वं कर्म समाचरेत् ।
द्वयाधिकारी न भवेत् सर्वमन्त्रेषु नार्हति ॥
द्वयैकमन्त्रनिष्ठा ये ते वै यांति तदव्ययं ।

श्रीराधाकृष्णोपासका एव श्रीवृन्दारण्ये प्राप्नुवंतीति तात्पर्यार्थः। तथैव श्रीराधामंत्रोद्धारात्पूर्वमेव निर्द्धारः कृतः कस्मिन् संवत्सरे कस्मिन्वासरे कस्यां तिथाविति संदिहाने गौतमे गर्गोक्तिः। "शुभे सारस्वते काले अष्टम्यां गुरूवासरे" इत्यादिना युक्तं गर्गसंहितायां—शुभं कृतिसंवत्सरे अष्टम्यां गुरूवासरे चेत्युक्तं। रसज्ञोपदेशं विनापि पत्रादितः प्राप्तेपि मंत्रद्वये सरूपा भक्ति र्न। उक्तं पाद्मे—

"अवैष्णवोपदिष्टस्य पूर्वमन्त्रवरद्वयम् ।
पुनश्च विधिना सम्यक् वैष्णवाद्ग्राहयेन्मनुम् ॥

द्वयाधिकारे श्रीराधापुरस्कारेणैव श्रीकृष्णं सेवयेत्। लौकिक-वैदिकन्यायेन। तदुक्तं कार्त्तिक माहात्म्ये—

"अत्र बुद्धे हरौ पूर्वं स्त्रीभिर्लक्ष्मीं प्रबोधयेत् ।
यथा पतिव्रता नारी ब्राह्मे काले प्रबुद्ध्यते ॥
पूर्वं भक्तु स्ततो लक्ष्मीं प्राग् हरेद्वादशाहकमिति ॥"

लोके हि स्त्रीणामुत्थानमंगसंस्कारश्च दृश्यते । लक्ष्म्यादौ श्रूयते च तथा श्रीराधायामपि। ननु वहवः श्रीकृष्णप्राधान्येनोपचरंति भोजयन्ति च श्रीराधां तथैवोचितमिति चेन्न। ईश्वरोपासनवर्त्मत्वात्। न वयमीश्वरोपासनमार्गं प्रतिषेधयामोऽपि तु रसमार्गे ।। वस्तुतस्तु ईश्वरमार्गेऽपि पातिव्रत्यधर्ममार्गेपि श्रीराधाया एव सेवनमुचितं। श्रीकृष्णस्येश्वरत्वे श्रीराधाया श्चोपा-

सिकात्वे पूर्वमेव सेवनं युक्तं किंचेदानींतनोपि भक्तः स्वस्मिन् स्नानादिसंस्कारं विधाय सेवायां प्रवर्त्तते न तु श्रीकृष्णसेवां कृत्वा पश्चात्स्वयं स्नानादिकं करोति। किंचेदानीमपि भक्तस्य सेवको वा शिष्यो वा पूर्वं भक्तमेव सेवयति, स्वकीयां सामग्रीं ददाति, तथा श्रीराधां सेव्य श्रीकृष्णं सेवयेत। अयं गूढ़ाभिसंधिः। श्रीनारायणवक्षसि स्थिता लक्ष्मीः श्रीनारायणं गौणं संपादयति। अपि तु प्रेमानमेव पुष्यति। तथा श्रीराधयान्यैः परिवारैश्च श्रीकृष्णमाधुर्यमेव पुष्यते आस्वाद्यते च। ततश्च श्रीमाधुर्यमेव पुरुषार्थः। सितापानकवत्। न हि जलं बिना सिता पेया अतः सिता श्रीराधा गौणत्वमिति न अपितु मुख्यत्वमेव तथा राधायामपि, "न हि पित्रा दत्ता दासी तत्पुत्रीं विहाय, तद्भर्त्तरि सेवाऽधिक्यं करोति परंतु तदाज्ञया तदीयत्वेन करोत्येव एवं प्रकृतेऽपि। यस्य तु तदीयत्वाभिमानो न किं तु श्रीकृष्णायाभिमानस्तस्य तथैव श्री दामपत्रिकादयः।। तत्रापि वस्तुतस्तु वयं तु कृष्णायाभिमानवतः तस्य तेषां शास्त्रेणैव व्यवहरामः। आदिपुराणे - ते ते ब्रह्मादयो देवा वाछंति यदनुग्रहम्। अहं तु तासां गोपीनां प्रेमानुग्रहवांछकः।। लोके श्रीजयदेवोक्तिश्च।। "स्मरगरलखंडनं मम शिरसि मंडनं देहि पदपल्लवमुदारमिति"।। इदानीन्तनभक्तप्रार्थना च। "त्वां साधु माधवीपुष्पैः माधुवेन कलाविदा। प्रसाध्यमानां स्विद्यंतीं वीजयिष्याम्यहं कदेति"।। आदिपुराणे - "भावानुरूपं सर्वत्र पार्थ व्यवहराम्यहं। किं तु तासु व्रजस्त्रीषु परिक्रीत इवानिशं"।। त्रैलोक्यसंमोहनतंत्रे- मानसे सरसि स्थित्वा तपस्तीव्रमुपेयुषाम्। जपंती सिद्धमंत्राणां ध्यायंती हरिमीश्वरम्। मुनीनां कांक्षतां नित्यं तस्या एव पदाम्बुजम्। एकसप्ततिसाहस्रं संख्यातानां महौजसमिति"।।

आदिवाराहे—

"यथा राधा प्रिया विष्णोस्तस्याः कुंडं प्रियं तथा।
सर्वगोपीषु सैवैका विष्णोरत्यतवल्लभा"।।

आदिपुराणे कृष्णार्जुनसंवादे -

"त्रैलोक्ये पृथिवी धन्या तत्र वृंदावनं पुरी ।
तत्रापि गोपिकाः पार्थ तत्र राधाभिधा मम ॥
पश्य यन्नामतः पार्थ पुलकांकुरितं वपुः ।
स्वयं धर्त्तुं न शक्नोमि तत्प्रेम द्विगुणीकृतम् ॥
त्वं मे प्राणाधिको यस्मात्तस्मादेतद्वदाम्यहम् ।
गोपिकानामयं देहः संदेहो नात्र कश्चन ॥
भक्ता ममानुरक्ताश्च कति संति न भूतले ।
किं तु गोपीजनः प्राणाधिकः प्रियतमो मम ॥
न तथा रोचते वेदः पुराणाद्यास्तथेतरत् ॥
यथा तासां तु गोपीनां भर्त्सनागर्वितं वचः" ॥

तथा गोपालोपनिषदि "तासां मध्ये हि वै श्रेष्टा गार्धवा ह्यु-वाच तं तं हि वै ताभिरेवं विचार्य कथं कृष्णो ब्रह्मचारी कथं दुर्वासनो मुनिः । तां हि मुख्यां विधाय पूर्वमनुकृत्वा तूष्णीमासुः ॥" नारदेनापि सर्वोत्तमत्वमुक्तं ब्रह्मविद्याख्याने -

"विद्यान्या योगमायाख्या हरेर्दक्षिणपार्श्वगा ॥
वहुधेशं निन्हुवाना राधा गोपी हरौ स्थिता" ॥

त्रैयोक्यसंमोहनतंत्रे—

"लक्ष्मीः सरस्वती कान्तिरित्याद्या वा वरस्त्रियः ।
छायामपि स्पृशंत्यस्याः कदाचिन्नैव लक्ष्यते ॥
विष्णोर्यन्मोहनी रूपं हरो येन विमोहितः ॥
मया दृष्टं तु तदपि कुतोस्याः सदृशं भवेत् ॥
अस्याः संदर्शनादेव गोविन्दचरणांवुजे ।
या प्रेमर्द्धिरभूत्सा मे भूतपूर्वा न कर्हिचित्" ।

इत्यादि श्लोकैः श्रीराधाचरणसेवने श्रीकृष्णप्रेमावस्यकता ॥

तत्र त्रिविधं सेवनं ध्यानात्मकं १ भजनात्मकं २ रसनात्मकं च ३

तत्रेश्वरे भजनं ध्यानं च, रसनं तु श्रीराधायां श्रीकृष्णे च। तदुक्तं श्रीगोपालोपनिषदि "एतद् यो ध्यायति रसति भजति सोऽमृतो भवतीति"। "तं ध्यायेत् तं रसयेत् तं यजेत्तं यजेदिति" बृहद्भावनयासकृदुच्चरेत्। यो गतिस्तस्यास्तिमंक्षु नान्या गतिः स्यादिति। तं ध्यायेत् रसयेत् तं यजेत्तं यजेदिति॥ भक्तिरहस्यमेनं॥ मूर्त्तिमती या भक्तिः सापि श्रीराधाश्रिता। तदुक्तं कृष्णोपनिषदि—"वृन्दाभक्तिः प्रियाबुद्धिः सर्वजंतुप्रकाशिनीति" तथैव श्रीराधामंत्रप्रतिज्ञानं गर्गसंहितायां "अतः परं प्रवक्ष्यामि मंत्रराजमिमं शृणिवति" अत एव श्रीराधासेवनं विना न रसात्मिका भक्तिः भक्तत्वेऽपि ब्रह्मणो भक्तिप्रार्थना दर्शनात्। भृगुं प्रति ब्रह्मवाक्यं-

"षष्ठि वर्ष सहस्राणि मया तप्तं तपः पुरा।
नंदगोपव्रजस्त्रीणां पादरेणूपलब्धये॥
तथापि न मया प्राप्तास्तासां वै पादरेणवः॥
स्त्रियो वा पुरूषो वापि भर्तृभावेन केशवं।
हृदि कृत्वा गतिं यांति श्रुतीनां नात्र संशयः॥
तासां पादरजोऽस्त्येवं नित्ये वृन्दावने भुवि।
इहप्येतत्कामनया यान्त्यहो गोपिका गतिम्॥

गौतमीये नारदोक्तिः—

"तत्प्रियायाश्च पादाब्जं प्रेम्णा मूर्द्धिन अधारयम्।
ततो गृहीत्वा मां देवः प्रविशन्मधुरं बनम्॥
श्रीवृन्दावनमाख्यातं यद्विरिंच्यादिदुर्गममिति॥"

श्रीकृष्णोक्तिरर्जुनं प्रति आदिपुराणे—

"सहाया गुरवः शिष्या भुजिष्या बांधवास्त्रियः।
सत्यं बदामि ते पार्थ गोप्यः किं न भवन्ति मे॥"

गुरवः इति विशेष्यं शिष्यादि विशेषणं शिष्यादि धर्माः न तु शिष्याः। श्रीराधिकास्वाद्यमेव श्रीकृष्णस्वरूपमन्ये धर्मा एव।
तदुक्तं तत्रैव—

अहमेवं परं रूपं नान्यो जानाति कश्चन।
जानाति राधिका पार्थ अंशानर्चन्ति देवता:॥
श्रीव्रजदेवीनां स्वरूपं श्रीकृष्ण एव जानाति श्रीकृष्णस्य श्रीराधैव अत एव श्रीकृष्णप्रसादाच्छ्रीराधास्वरूपं ज्ञायते। प्रेममाधुर्यास्वादे श्रीराधा मुख्या पार्थ एव धनुर्धर इतिवत्। तदुक्तं तत्रैव--
"गोप्य एव हि जानन्ति मद्रूपं मत्क्रियादिकम्।
तासां मर्माणि कर्माणि स्वयं जानामि नेतर:॥
न मां जानंति मुनयो योगिनश्च परंतप।
न च रूद्रादयो देवा यथा गोप्यो विदंति माम्॥
मन्माहात्म्यं मत्सपर्यां मच्छ्रद्धां मन्मनोगतम्।
जानंति गोपिका: पार्थ नान्ये जानन्ति मर्मणि॥"
एतत्सर्वं कोपि न जानाति। तदुक्तं पाद्मे--
"मन्मायामोहितधिय: सर्वे कालनिबन्धनात्।
कोपि वेद पुमान् लोके मदनुग्रहभाजन:॥
अत्रानुग्रहभाजने अखंडमाधुर्यज्ञानं तथा भावविशेषवत्वेन तु अन्यस्तु प्रकारभेद: सखंडज्ञानं। अन्यथार्जुनप्रश्न: व्यर्थ: स्यात्। ततोऽखंडमाधुर्यप्राप्तिविषय: प्रश्न: न तु पुरूषे भजनाभाव:। तथाहि। अर्जुनोवाच—स्त्रियस्तास्तेन तै र्भावैर्भगवान् स्वमुपासित:। पुरूषा: कथमर्चंतु त्वामखंडरसात्मकमिति॥"अखंडरसस्तु श्रीराधाकृष्णमाधुर्यं तच्च पुरूषे न संभवतीतिभाव:। तस्योत्तरं भगवानुवाच—
रहस्यानां रहस्यं यत् दुर्लभानां च दुर्लभम्।
यत्ते वदाम्यहं पार्थ श्रुत्वा मनसि संवृणु॥
गोपीभावेन ये भक्ता: मामेवं समुपासंते।
तेषु तास्विव तुष्टोस्मि सत्यं सत्यं वदाम्यहम्॥
तथा स्वतंत्रोपासना च गर्गसंहितायामुक्ता-"बाह्य आवरणे धूपं गुग्गुलं घृतमिश्रितं। मध्य आवरणे देयं कृष्णागुरूविमिश्रितमिति।"
तथैव वृहद्वामनपुराणे—

"यथा त्वल्लोकवासिन्यः कामतत्वेन गोपिकाः ।
भजन्ति रमणं मत्वा चिकीर्षाजनिनस्तथा ।।"

तत्रैव ब्रह्मणो वाक्यं ।"स्त्रियो वा पुरुषा वापि भर्तृभावेन केशवम् ।
हृदि कृत्वा गतिं यांति श्रुतीनां नात्र संशयः ।।"

महाकूर्मे—

"अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे ।
भर्त्तारं च जगद्योनिं वासुदेवमजं विभुमिति ।।"

नारायणव्यूहस्तवे च—

"पति-पुत्र-सुहृत्-भ्रातृ-पितृवन्मित्रवद्धरिम् ।
ये ध्यायन्ति सदोद्युक्तास्तेभ्योऽपीह नमो नम इति ।।"

श्रीभागवते च—

"कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च ।
नित्यं हरौ विदधते यान्ति तन्मयतां हि ते ।।"

"कामाद्गोप्यो भयात्कंस" इत्यादि । श्रीधराचार्येणाप्युक्तं "कतमोऽपि न वेनः स्यात्पंचानां पुरूषं प्रती" त्यत्र पुरुषे कामासंभवात्पंचानामित्युक्तमिति ।।" नारदावस्थायामपि श्रीराधा-प्रसादादेव बृन्दावनप्रवेशः । तदुक्तं गौतमीये नारदोक्तिः—

"तत्प्रियायाश्च पादाब्जं प्रेम्ना मूर्द्ध्न अधारयम् ।
ततो गृहीत्वा मां देवः प्रविशन्मधुरं बनम् ।।
श्रीबृन्दाबनमाख्यातं यद्विरिंच्यादि दुर्गमम् ।
ता गोपीः तच्च तद्रूपं तद्बृन्दाबनमद्भुतम् ।।
तत्र संमोहनं रूपं गोबिन्दस्य महाद्भुतम् ।
सा च तत्प्रेयसी सर्वयुवतीकुलभूषणेति ।।"

मन्त्रोपासनाबता तत्र बांधवं च प्रत्यहं कुर्यात् । वर्षमात्रसुसंयताभिर्यत्र सदालापं सत्कुर्वन् ब्रजांगणा तस्यात्मानं स गोविन्दः साक्षाद्दर्शयते ध्रुवमिति । गर्गसंहितायाम्—

मंत्रमुक्ता गदद्यात्कृत्वा कर्मनाद्वर्णं संकरैः ।
मत्सरे न्मासिने वर्णाहीनेऽत्यजे तथा ॥

त्रैलोक्यसंमोहनतंत्रेपि । श्रीराधादर्शनांतरं—

दृष्ट्वा तस्या परं रूप मदृष्टाश्रु तमद्भुतम् ।
अभूत पूर्व संवृद्ध हरिप्रेममहारसः ॥
विगाह्य परमानन्दसिन्धुमेकरसायनम् ।

ततः श्रीनारदहृदयविमर्शः --

ब्रह्मलोके रुद्रलोके बिष्णुलोकेऽपि मे गतिः ।
न कांतिशोभाकोऽस्य ंशः कुत्राप्यस्यावलोकितः ॥
लक्ष्मीः सरस्वती कान्तिरित्याद्या या वरस्त्रियः ।
छायामपि स्पृशंत्यस्याः कदाचिन्नैव लक्ष्यते ॥"

श्रीभागवतेऽपि सर्वोत्तमोक्ता।"नद्योऽद्रयः खग-मृगा-सदयावलोकैः, गोप्योंतरेण भुजयोरपि यत्स्पृहा श्रीः ।" "नायं श्रियोंग उ नितांतरतेः प्रसाद" इत्यादि । किं च आनन्दरूपस्य श्रीकृष्णस्य श्रीराधास्वरूपं बिषयः । त्रैलोक्यसंमोहनतन्त्रे--

"कीदृशं तब लावण्यलीलाहासेक्षणादिकं ।
हरिमानसलोभाय पराश्चर्यमयं भवेत् ॥
आनन्दरूपिणी शक्तिस्त्वमीश्वरि न संशयः ।
त्वया क्रीडिष्यते कृष्णो नूनं वृन्दावने बने ॥
द्रष्टुं तदहमिच्छामि रूपं ते हरिवल्लभे ।
येन नन्दसुतः कृष्णः संमोहमुपयास्यति ॥

श्रीकृष्णप्राकट्यानन्तरं श्रीकृष्णप्रार्थना नारदस्य—

"कदाहं त्वत्प्रसादेन अनया दिव्यरूपया ।
सहितं नवतारुण्यमनोहारिवपुः श्रिया ।
विलोकयिष्ये कैशोरमोहनं त्वां जगत्पते ॥"

अन्यच्च तत्रैव—

"तामेव तत्परतया भूयो भूयः प्रणम्य च ।
स्पृष्ट्वा च चरणांभोजं पश्यन्नेव स्थितो मुनिः ॥"

श्रीकृष्णं संगोप्य नारायणशब्देन श्रीराधाधीनत्वं वर्णयति श्रीनारदः श्रीवृषभानौ ।

"किंतु यद्गृहमेतस्याः पादचिह्नविभूषितम् ।
तत्र नारायणो देवः सर्वदेवगणैः सह ।
लक्ष्म्या च बसते नित्यं सर्वाभिश्चैव सिद्धिभिः ॥

तच्चरणाश्रयस्य सर्वरहस्यस्फुरणं भवतीत्याह—

"परावरमहं सर्वं बिजानामीह सर्वतः ।
गोगोपगोपिकादीनां रहस्यं चापि वेद्म्यहम् ॥

किंचानेकमुनीनां तदुपासनैवोक्ता, नारदेन गौतमं प्रति । यथा "सिद्धमंत्राश्च ध्यायतां हरिमीश्वरं मुनीनां" ॥

किंच किमत्र कृत्यं मधुररसे श्रीराधाया प्राधान्यं, यतः सख्यादिरसेऽपि सख्यादीनां प्राधान्यं । तथाहि श्रीभागवते च—"उवाह कृष्णोभगवान्-"

"कदाचिदौत्थानिककौतुकाप्लवे जन्मर्क्षयोगे समवेतयोषितां ।" (इत्यादि) इत्यंगपरिवर्त्तनासामर्थ्यात् यशोदाधीनता ॥ "अतृप्तमुत्सृज्य जवेन सा ययावुत्सृच्यमाने पयसि त्वधिश्रिते"। इति यशोदाभयसंभ्रांतप्रेक्षणाक्षमभाषतेति ॥ रूदंतं सुतमादाय यशोदा ग्रहशंकिता "॥ "तां स्तन्यकाम आसाद्य मथ्नंतीं जननीं विभुः ॥" 'हैयंगवचौर्यविशंकितेक्षणामिति च ।" "कृतागसं तं प्ररुदंतमक्षिणी कषन्तमञ्जन्मषिणी स्वपाणिना ।" त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला । हस्ते गृहीत्वा भिषयन्त्यबागुरत् ॥ अत्र भोक्तव्यमस्माभिरित्यादौ पराधीनत्वदर्शनात् ॥ यदि च वाल्यादिरूपं तत्कृतिश्च क्षुधादि च तद्दत्तस्वीकारादिव नित्यमवाधितं च न स्यात् तर्हि सर्वोपि भक्तिविषयको व्यवहारः कापट्यमेव स्यात् भक्ताना-

मपि स्वरूपव्याघातत्वेनानर्थः स्यात् । निरपेक्षत्वादिभगवत्स्वरूपस्य नित्यस्य सापेक्षत्वमनित्यं संपादयतो भक्तस्य ईश्वरस्वरूपव्याघातकत्वं स्यात् ईश्वरस्यापि भक्तेषु हितकर्तृत्वं न स्यात् । स्वरूपतिरोधानात् निरपेक्षस्वरूपतिरोधानेन सापेक्षप्राकटयात् । तस्मादीश्वरस्वरूपं भक्ताधीनत्वं भक्तसापेक्षत्वादिकं । स्वातंत्र्यनिरपेक्षादिकं धर्म इत्येव राद्धांतः ( आराध्यतः ) यथा क्षुधादरिद्रादि व्याप्तोऽपि ब्राह्मणः म्लेछान्नादिमगृह्णन् निरपेक्षस्वरूपो भवति तद्वच्छ्रीकृष्णोऽपि ।

इति श्रीनारायणभट्टविरचिते भक्तिविवेके
शब्दानुकूलतर्कोल्लासः प्रथमः ॥ १ ॥

——:०:——

अथ भक्तिरसोल्लासः

"वैकुंठ-लोक-वेदेषु, तत्स्थै दृष्टा न च श्रुता ।
सा भक्तिर्व्रजनिष्ठैस्तु दृश्यते राधिकाप्रिये" ॥

नारदपंचरात्रे ।—

विभो शास्त्रस्य च गुरोः त्रितयस्य च पूजनात् ।
फलं यल्लभते नूनं इह लोके परत्र च ।
ज्ञानस्य साधनं शास्त्रं तच्छात्रं गुरुवक्त्रगम् ।
सर्वस्वमपि यो दद्यात् भक्तिश्रद्धा-विवर्जितः ॥
न्ययाचारविनिर्मुक्तो मानी शास्त्रार्थं रस न ॥
न तस्य शास्त्रं वक्तव्यं ब्रूते वा यः स पाप्मधः ॥
सदाचारेण यो ब्रूयात् श्रृणुयाद् घोरवर्जितं ॥
शास्त्रज्ञानेन योऽज्ञानतिमिरं विनिपातयेत् ।
शांतिदं च महार्थं च वक्ति यः स जगद्गुरूः ॥
यो वक्ति न्यायरहितं विनान्यायं श्रृणोति यः ॥
तावुभौ च नरकं घोरं व्रजतः कालमक्षयं ॥

अतः शास्त्रोक्तं न शिष्टपरिगृहीतेन च भक्तियोगेन भगवद्भक्त्यो माधुर्यास्वादो भवेत् ॥ यथा सहस्रनाम्नि शिष्टैः कृष्णरामादिनामान्युच्यंते न विश्वादि किं च लाभादिनिमित्तमन्यथाव्याख्यानं अनर्थजनकं । तदुक्तं-"लाभपूजानिमित्तं हि व्याख्यानं शिष्यसंग्रहः । एते चान्ये च वहवः प्रपंचास्तु तपस्विनः ॥ ध्यानं शौचं तथा भिक्षा नित्यमेकांतशीलता भिक्षोश्चत्वारि कर्माणि पंचमं नोपपद्यते" इति । भविष्योत्तरे—

"योऽन्यथा वक्ति वै मोहात् भक्तिश्रद्धान्वितेषु च ।

लोभेनान्यायतः कामात् स याति नरकेऽधमः ॥"

तत्र भक्तिस्त्रिविधा मर्यादात्मिका पुष्टिरूपा रसरूपा च । तत्र मर्यादात्मिका वैधीभक्तिः, शास्त्रमपेक्षया भगवद्विषयिका कृतिः सा वैधीभक्तिः। कर्त्तुमकर्त्तुमन्यथाकर्त्तुंसामर्थ्यद्योतिका पुष्टिभक्तिः सैव पोषणशब्देनोच्यते षष्ठे अजामिलोपाख्यानादौ। रसरूपा रागात्मिका, स्वाभाविके विषये स्वाभाविकी संसर्गप्रीतिः रागस्तदात्मिका । यथा चक्षुरादीनां सौंदर्यादौ । विधिनिषेधावनपेक्ष्य प्रवृत्तिः सा च रागात्मिका भक्तिर्द्वादशधा । प्रियवर्गे श्रीकृष्णस्य तथा श्रीराधायां श्रीकृष्णस्य प्रवृत्तिः श्रीकृष्णे श्रीराधायाः । श्रीकृष्णस्य वृत्तिः स्वाभाविकी श्रीराधायां । आदिपुराणे—

"आब्रह्मस्तम्बपर्यंतं मन्मायापरिजृंभितम् ।
गोपीनामपि या माया समायाति दुरत्यया ॥
गोपिकानाममात्रेण मनः किमिव वर्त्तते ।
ते ते ब्रह्मादयो देवाः वांछति मदनुग्रहम् ॥
अहं तु तासां गोपीनां प्रेमानुग्रहवांछकः ।
त्रैलोक्ये पृथिवी धन्या यत्र वृन्दाबनं पुरी ॥
तत्रापि गोपिका पार्थ तत्र राधाभिधा ममेति ॥"

श्रीभागवते—"अहं भक्तपराधीनो ह्यस्वतंत्र इव द्विजेति ।"

आदिपुराणे--प्रेमपरिपाटी-"निजांगमपि या गोप्यो ममेति समुपासते। ताभ्य: परं न मे पार्थ निगूढ़प्रेमभाजनमिति।" श्रीकृष्णे श्रीराधाया अनुराग श्रीभागवते च-"कास्त्र्यंग ते कलपदायतवेणुगीतसंमोहितार्यचरितान्नचलेत् त्रिलोक्यां। त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विज-द्रुम-मृगा-पुलकान्यबिभ्रन्।" ततश्च श्रीकृष्णश्रीराधाविषयका रागानुगा स्वरूपविषयत्वात्। ततः श्रवण-कीर्त्तन-स्मरण-पादसेवन—वंदनात्मनिवेदनसख्यानि तरङ्ग-रूपाणि रागात्मिका या सा रस रूपा साध्यैव न साधनरूपा। श्रीकृष्णस्य व्रजबिषयविशेषे रुचिरेब जाता अत एव रागात्मिकोच्यते। यथा श्रीवृन्दाबनतृणमाधुरीमवलोक्य बत्सरूपता जाता श्रीकृष्णस्य। गो-गोपिकास्तन्यमाधुरीमवलोक्य वत्स-बालरूपता जाता। न हि रागं बिना तथा संभवति। न हि श्रीकृष्णे शास्त्रं बिधायकं अतः श्रीकृष्णप्रवृत्तिः रागेनैब। तत्र रागः अनुरागः, स बस्त्वतः सुन्दरे विषये भबति। अबिकृतः नित्यः सुन्दरो विषयः प्रियवर्ग एब नत्वन्यः। तत्रैब आह्लादिनी संधिनी संबिच्छक्तिमूर्त्तिमतो चरणाश्रिता मंतव्या। बस्तुतस्तु आह्लादिन्यादिशक्तीनां न कृष्णे प्रवेशः नवा प्रियबर्गे किंतूभयोः स्वरूपमेव आह्लादकं तत्वाह्लादिन्या। अन्यथानवस्था कृष्णस्य गौणता स्यात्तस्मादुभयोः स्वरूपमेव आह्लादकं न तु शक्त्या, बिबशक्त्यादीनामीश्वरत्वे प्रवेशः न तु श्रीबिग्रहे। अतः प्रियबर्गसंसर्गेण किं श्रीकृष्णे प्रतिबिंब आह्लादिन्याः। तदुक्तं संमोहनतन्त्रे—

इच्छाशकितः क्रियाशक्तिः ज्ञानशक्तिर्तथेशितुः।
तवांशमात्रमित्येवं मनीषा संप्रबर्त्तते॥
या या बिभूतयोऽचिंत्या अचिंत्यातर्क्यमायिनः।
परेशस्य महाविष्णोस्ता सर्वास्ते कलाकलाः॥

आह्लादिन्यादीनां श्रीकृष्णनिष्ठत्वे अघासुरादीनामपि श्रीकृष्ण-

दर्शने आल्हादः स्यात् प्रत्युत दुःखमेव तेषां भवति । अयं प्रघट्टकार्थः केवलाच्छ्रीकृष्णात् भक्तानां आल्हादिन्या शक्त्यानन्दो भवति । न तु श्रीकृष्णस्वरूपात् । श्रीराधां बिना श्रीकृष्णस्वरूपाभावात् तथा कलानामभावे कृष्णपक्षे चंद्रस्वरूपो बिसदृशो दृश्यते न त्वमृतरूपः रूपः । तथा प्रियवर्गाभावे ब्रह्म-स्वरूपेण वा परमात्मस्वरूपेण वा ऐश्वर्यरूपेण वा श्रीकृष्णः दृश्यते न तु रसरूपेन तदा रसरूपः श्रीकृष्णानन्दः प्रियवर्गाधीन उच्यतेऽपि तु स्वतन्त्र एव सितानंदवत् । रसरूपानंदस्तु प्रियवर्गाधीन एव सितायाः पेयता जलाधीना यथा । अतः सर्वे श्रीकृष्णभक्ता आनन्दमनुभवन्ति । रसानन्दं तु बिरलाः रसज्ञा एव मधुव्रत इव सरसकमले न तु शुष्के । तथा स्कांदे—

"चन्द्ररूपी मतः कृष्णः कलारूपास्तु ताः स्मृताः ।
संपूर्णमण्डला तासां मालिनी षोडशी कलेति ॥"

ततश्च चंद्रिकारूपां कलां बिहाय यथा चन्द्रत्वं न किंतु देवत्वं तथा श्रीराधां बिहाय न कृष्णत्वं किं तु ब्रह्मत्वमेव । अन्यनिरपेक्षत्वमेव स्वरूपनिष्ठत्वं, अन्य सापेक्षत्वेन गुणनिष्टत्वम् । तथा हि संसारनाशकत्वेन पूर्णत्वेन ब्रह्मत्वेन इश्वरत्वेन परमानन्ददातृत्वेन पुरुषार्थदातृत्वादिना श्रीकृष्णे प्रवृत्तिः गुणनिष्ठत्वं एतत्सर्वमपेक्ष्य श्रीकृष्णे प्रवृत्तिः स्वरूपनिष्ठत्वं, यथा कुब्जा-यज्ञपत्नी-नागरिक स्त्रीभौमावरुद्धकन्यानामैश्वर्यादिनैरपेक्ष्येण प्रवृत्तिः सा स्वरूपनिष्ठा । तथा श्रीकृष्णस्यापि प्रवृत्तिः प्रियवर्गस्वरूपे । वस्तुतस्तु श्रीकृष्णसुखं भिन्न प्रियवर्गानन्दस्तु भिन्न एव मिश्रितायां तु भिन्न एव परमानन्दः । यथा चूर्णहरिद्रामिश्रणे भिन्न एव रागः । यत्र तु श्रवण-कीर्तनाद्यभावे प्रवृत्तिः स्यात् किं च श्रीकृष्णस्याल्हादः स्वीकरणीयः रसपक्षे ईश्वरपक्षे वा यदि स्वतः आल्हादः तद्युभयपक्षेऽपि अन्यापेक्षा न स्यात् दृश्यते वान्यापेक्षा ततः श्रीकृष्णस्या-

ल्हादकः प्रियवर्गः प्रियवर्गस्याल्हादकः श्रीकृष्णः। तदुक्तं त्रैलोक्य-संमोहनतन्त्रे—

"आनन्दरूपिणी शक्तिस्त्वमीश्वरि न संशयः।
त्वया क्रीडिष्यति कृष्णो नूनं वृन्दावने वने ॥

अनेन श्रीकृष्णस्याल्हादः श्रीराधया। श्रीराधास्वरूपं त्वानन्दमयं तदुक्तं तत्रैव--"महामहेश्वरीं नत्वा महानन्दमयीं परां। हरि-मानसलोभाय पराश्चर्यमयं भवेत्। येन नन्दसुतः कृष्णः संमोह-मुपयास्यति।" गर्गसंहितायां जन्मोक्तं। "मृगराजमहालग्ने तदा-आविर्भविष्यति" ॥ "सत्यकामः सत्यसंकल्पः आनंदभुगिति" श्रुतेः। पाद्मे—
"भोगार्थं परम व्योम लीलार्थमखिलं जगत्" ॥ इति। संद्रकोप-निषदि—"भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे इति।" तथा पाद्मे—यौ वै नित्यपदो नित्यो नित्यभोगैकभोगवान इत्यादौ नित्योभोगः नित्य-भोगत्वे भोग्यस्य नित्यत्वं स्वीकरणीयं भोग्यस्य स्वतः नित्यत्वे सौंदर्यभोगस्य तथैव स्वीकरणीयं नहि कुत्सिते भोगेच्छा भवति तस्मान्नित्यसौंदर्यं ततः भोग्याश्रयोपि भोग्य एवातएव श्रीकृष्णस्याभिमानो मदीयोऽयमिति ॥ तदनंतरं सर्वरस-आवर्णी भक्तिरतेराविर्भावोऽन्यथा सर्वांतरंगोऽपि श्रीउद्धवादिः कथं चरणरजः प्रार्थयेत् ॥

तथाहि —

वंदे नंदव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ॥
यासां हरिकथोद्गीतं पुनाति भुवनं त्रयमिति" ॥

वृहद्वामने ब्रह्मवाक्यं—

"षष्ठिर्वर्षसहस्राणि मया तप्तं तपः पुरा।
नंदगोपव्रजस्त्रीणां पादरेणूपलब्धये ॥
तासां पादरजोस्त्येव नित्यं वृंदावने भुवि ॥
तत्प्राप्य तत्कामनया यांत्यहो गोपिकागतिमिति" ॥

आदिपुराणे—

अहं ता गोपिका पार्थ ताश्च स्वयमहं भुवि ।
उभायोस्तनुभिर्भेदः प्राणा एके न संशयः ॥
भावानुरूपं सर्वत्र पार्थ व्यवहराम्यहं ।
किं तु तासु व्रजस्त्रीषु परिक्रीत इवानिशं ॥
पश्य यन्नामतः पार्थ पुलकांकुरितं तनुं ।
स्वयं धर्त्तुं न शक्नोमि तत्प्रेमद्विगुणीकृतं ॥

अत-एवोभयोः परमानंदरूपयोः परस्परं तु षड्विधास्वादः तथा हि "सिद्धिस्तुष्टिः स्थितिर्भोगः क्रीडा स्वाधीनता तथा । अयं तु षड्विधास्वादः श्रीकृष्ण-प्रियवर्गयोः । उत्कंठानंतरं प्राप्तिः सिद्धि-रित्यभिधीयते । वियोगानंतरं प्राप्तिस्तुष्टिशब्देन कथ्यते । स्वरूपेण गृहाद्यै र्वा वासः स्थितिरिहोच्यते । भोगः स्वरूप-माधुर्यास्वादः सर्वात्मना मतः । मनोगतायां क्रीडायां वृत्तिः स्वाधीनता मता" । अयमर्थः उत्कंठितायां श्रीराधायां सत्यां तदनंतरं श्रीकृष्णस्य प्राप्तिः सिद्धिः तथोत्कण्ठिते श्रीकृष्णे श्रीराधाप्राप्तिः सिद्धिः । इयं सिद्धिर्द्विविधा समा विषमाविति । तत्र समा समकालोत्कंठितयोः समागत्योभयोः प्राप्तिः सा समा सिद्धिः, उभयोः समत्वात् । विषमासिद्धिस्तु यत्रैकस्य विवशतान्यस्य न तत्र विषमाविवश निकटे तस्य गमनात् । यद्यपि अवलोकन-स्पर्शजनितानन्दे समता तथापि विवशस्यैवाधिक्याद्विषमा । तुष्टिस्तु समैव वियोगस्योभयत्र समत्वात् । समत्वाभावे सामरस्य न स्यात् । स्थितिरपि समैव गृह-स्वरूपयोरेकरूपत्वात् । भोगोपि सम एव । तथा क्रीडायां स्वाधीनता समैव । यथा गीतगोविन्दे—"रचय कुचयोः पत्रं चित्रं कुरुष्व कपोलयोः, घटय जघने कांचीमंच स्रजा कबरीभरं । कलय वलयश्रेणीं पाण्योः पदे कुरु नूपुरं, विनिगदितः प्रीतः पीतांबरोपि तथाऽकरोत्" इत्यादि । तथा वत्सलादौ ज्ञेयं ; तथाहि वत्सलरसे मातृवर्गसमस्कंधानां व्रजांगनानां साक्षात्स्तनपानविषय-

कोत्कंठायां सत्यां श्रीकृष्णे साक्षात्स्तनपानोत्कंठिते। एवं गवामपि श्रीकृष्णं दृष्ट्वा दुग्धक्षरणात्साक्षात्पानं कारयितुमुत्कंठायां सत्यां तथा श्रीकृष्णस्यापि ततः श्रीकृष्णपाने प्रवृत्तिः सिद्धिः। एवं प्रेयोरसे श्रीकृष्णोद्भावितवन्यक्रीडोत्कंठिते। एवं गवामपि सखिगणे। तथा सखिगणोद्भावितवन्यक्रीडोत्कंठिते श्रीकृष्णे तदनंतरं परस्परप्राप्तिः सिद्धिः। तथोक्तं दशमे—

"क्वचिद्वनाशाय मनो दधद्व्रजात्प्रातः समुत्थाय वयस्य वत्सपान्। प्रबोधयन् शृङ्गरवेण चारुणा विनिर्गतो वत्सपुरःसरो हरिः॥ तेनैव साकं पृथुकाः सहस्रशः स्निधाः सुशिक्वेत्रविषाणवेणवः। स्वकान् सहस्रोपरि संख्ययायुतान् वत्सान् पुरस्कृत्य विनिर्ययुर्मुदा"॥ तथा शन्तिरसे-कालियदमनसमये महोत्पातदर्शनेनोत्कंठितानां ब्राह्मणानां। तथा श्रीकृष्णस्य सर्वमंत्रज्ञा ब्राह्मणा इति स्मरणवतः तपस्विवेषेण स्थिताः गार्गीप्रभृतयः। सखी सखायो वेषांतरेण स्थिता श्रीकृष्णश्च ब्रह्मचारिवेषादिनानयोरुत्कंठाऽनंतरं प्राप्तिः सिद्धिः। जुगुप्सारति स्थायी तेन स्नेह एव पुष्यते। करुणरसे वत्सबालकानामुत्कंठा तथा श्रीकृष्णस्यापि उभयो प्राप्तिः सिद्धिः एवं सर्वरसेष्वालंबो उत्कंठितस्य च तदनन्तरं प्राप्तिः सिद्धि। तदुक्तं दशमे—

"आबालवृद्धवनिताः सर्व्वेऽगं पशुवृत्तयः।
निर्जग्मुर्गोकुलाद्दीनाः कृष्णदर्शनलालसाः॥
नन्दं बिप्राः समागम्य गुरवः सकलत्रकाः।
ऊचूस्ते कालियग्रस्तो दिष्ट्या मुक्तस्तवात्मजः॥
देहि दानं द्विजातीनां कृष्णनिमुक्तिहेतवे इति॥"

हास्यरसे-विचित्रालाप-विकृतांगादिषु समुत्कंठितेषु तथा गोपमंडलीमध्ये उत्कंठिते श्रीकृष्णे उभयोः प्राप्तिः सिद्धिः। मुष्णतोऽन्योन्यशिक्यादीन् ज्ञातानाराच चिक्षिपुः। हसंतो हासयंतश्चाभ्य-

वजहुः सहेश्वराः। रौद्ररसे जटिलाद्याः तासु समुत्कण्ठितासु। उत्कण्ठा तु मम वधूनिकटागते कृष्णे साम मार्गेण मम गृहागमनं मा कुरु (वृषभ) धृष्टत्वे भर्त्सनां गालिप्रदानं ताडनं च करिष्यामीति। श्रीकृष्णेप्युत्कंठा प्रकारांतरेण तद्गृहगमने कृते क्रुद्धायां जरत्यामेवं वदिष्यामीति। तव पुत्रेण मम शुको हंसो सारिका च प्रतिवद्धेति। तदनन्तरमुभयो प्राप्तिः सिद्धिः। यद्यपि प्राणादप्यधिकः प्रेमास्पदः श्रीकृष्णः जटिलादीनां तथापि वधुविषयकावलोकनादिना रौद्रता ज्ञेया। तथा प्रीतरसेऽपि। मधुर-मधुव्रत-रक्तक-पत्रकाद्याः। तेषां सेवायामुत्कंठितेषु तथा नृत्यगानादि-जनित-श्रमापनयनायोत्कंठिते श्रीकृष्णे च तदनन्तरं प्राप्तिः सिद्धिः। तदुक्तं नारदेन—

पादसंवाहनं चक्रुः केचित्तस्य महात्मनः।
अपरे हतपाप्मानः व्यजनैः समबीजयन्॥

भयानकरसे—तीक्ष्णश्रृंगवृषभादिधर्षणार्थप्रवृत्ते श्रीकृष्णे निवारणाद्धेतो वान्धवा एवं दारुणाः। ततश्चोभयोः प्राप्तिः सिद्धिः। क्रोधरतिः स्थायी तेन स्नेह एव पुष्टी क्रियते। वीररसे-द्वन्द्वशः दंडादंडि-मुष्टामुष्टि-विल्वामलका एभा क्रीडोत्कंठितयोः प्राप्तिः सिद्धिः॥ तदुक्तं—"क्वचिद्वादयतो वेणून् क्षपणैः क्षिपतः क्वचित्। वृषायमानौ नर्दन्तौ युयुधाते परस्परमित्यादि।" "उवाह कृष्णो भगवान् श्रीदामानं पराजित इत्यादि।" बीभत्सरसे-तपस्विवेषेण स्थिताः गार्गी-प्रभृतयः। सखी सखायो वेषांतरेण स्थिताः श्रीकृष्णश्च ब्रह्मचारिवेषादिनानयोरुत्कंठानन्तरं प्राप्तिः सिद्धिः जुगुप्सा रतिस्थायी तेन स्नेह एव पुष्यते। करुणरसे वत्सबालकानामुत्कंठा तथा श्रीकृष्णस्यापि उभयो प्राप्तिः सिद्धिः एवं सर्वरसेष्वालंवनेषु च यथा योग्यमुह्यं विवेकत्वं। प्रेमा शब्दस्तु अन्यं क्रोड़ी—कृत्यैव प्रवर्त्तते। यथा पुत्र-मित्र-गृहस्थादिशब्दः, पुत्रशब्दः पितरं मातरं

च क्रोड़ीकृत्य प्रवर्त्तते। एवं प्रेमा शब्दः। कस्य कस्मिन् प्रेमा वर्त्तत इति भक्तवर्गस्य प्रेमा श्रीकृष्णे इति। ततश्च व्रजे एक एव प्रेमानन्दः। श्रीकृष्णं प्रियवर्गं च क्रोडीकृत्य प्रवर्त्तते। स प्रेमानंदः द्वादश भेदं गृह्णाति आलंबनानां द्वादशत्वात् द्वादश प्रकारः। यथैकैव शर्करा प्रकारभेदादनेकधा। तथाहि—श्रीकृष्णे यशोदायाः वत्सलो रसः, श्रीराधाया मधुरो रसः, सखीनां प्रेयोरसः, दासानां प्रीतो रस इत्यादि ज्ञेयं॥ यतः व्रजे प्रेमा एक रूप एवातो व्रजे परस्परविषयकक्रियाकलापः आनंदरूप एव। तदुक्तं ब्रह्मवैवर्त्ते—

"हरेरूपासना चात्र सदैव सुखरूपिणी॥
नवसाधनभूता सा सिद्धरेवात्र सा यतेति"॥

इदानींततभक्तेन मंत्रद्वयं स्वीकृत्य रसनप्रकारेणोपासना कार्या। तत्र रसज्ञ-गुरुद्वारा चतुष्टयं ज्ञात्वा प्रवर्त्तनीयं। श्रीकृष्णस्वरूपं प्रियवर्गस्वरूपं प्रेमस्वरूपं च एतत्त्रयमवधिभूतं ज्ञात्वा ततः कोऽहमिति स्वरूपं च। तत्र श्रीकृष्णस्वरूपं श्रीराधाप्रियत्वमवधिः। प्रियवर्गस्वरूपं श्रीकृष्णप्रियत्वेन। प्रेमस्वरूपं तदवधिः अद्भुत रस एव। अत एक एव रसोऽन्येऽनुभावाः॥ तदुक्तमग्निपुराणे - "रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते। तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः।" केचित्तु द्वादशरसं दशरसं वा नव रसं मन्यंते। तन्मतेपि अद्भुत एव रसराजोऽन्ये गौणाः। ये तु रसाः पंच मुख्याः सप्त गौणास्ते तु लौकिकाभिप्रायेण। मधुरस्य रसराजत्वे वात्सल्यालंबनादिनोद्भाविते वात्सल्ये शृंगाररसाभिभवो न स्यात्। तस्मादद्भुत एव रसः स अद्भुतो रसः श्रीकृष्णराधाश्रित एव स एव प्रेमाशब्देन कथ्यते। तत्र प्रेम्णि मुख्योऽनुभावः शृंगारः (उज्वलः) अन्यत्र रसतादात्म्यापन्नत्वात् मधुरो रसः कथ्यते। श्रीराधाकृष्णाश्रयत्वात् मधुरांगाणां प्राचुर्याच्च मधुररसो मधुवत्॥ मधुनि तिक्तकसायादीनां विद्यमानत्वेऽपि मधुरसे मधु-

त्वेन सिद्धिः एकत्वे वहुत्वे वा प्रेमा त्वेकविध एव ॥ यद्यपि परस्परप्रेम्नि श्रीकृष्णास्वादो न प्रतीयते तथापि श्रीकृष्णविषयक एव ज्ञेयः वाक्यप्रमाण्यात् ॥ तथाहि "व्रजौकसां स्वतो केषु स्नेहवल्याब्दमन्वहं । शनैर्निःसीम ववृधे यथा कृष्णे त्वपूर्ववत् ।"

"नंद ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथमिति"। श्रीधराचार्योक्तिश्च । अजामिलस्य भक्तत्वं विष्णुदूतैर्निरूपितं । "संकेत्य भगवन्नाम पुत्रस्नेहानुषंगजमिति" नारायणनाम्नि पुत्रे स्नेहं कुर्वतोऽजामिलस्य भक्तिपर्यवसानात् ॥ एवं श्रीकृष्ण-सखिसु श्रीदामाप्रभृतिषु स्नेहं कुर्वतां मातृपित्र्यादीनां श्रीकृष्णप्रेम्नि पर्यवसानं । एवं च प्रेम श्रीकृष्णभक्तानामवधिभूतं गोकुलमेव । ततस्त्रयाणामन्यतरस्य चोपासनया रसभक्तेरास्वादः ॥ तदुक्तं तैत्तरीयके - ते ते धामान्युष्मसि गमध्ये। गावो यत्र भूरिश्रृंगा अयासः ॥ अत्राह तदुरुगायस्य विष्णोः परमपदमवभाति भूरेः। ते तव ते तानि धामानि रहस्यानि स्थानानि गमध्ये प्राप्तुं ज्ञातुं वा उष्मसि कामयामहे । कुत्र स्थितः सन् कामयसे तत्राह । यत्र गोकुले भूरिश्रृंगाः दीर्घश्रृंगाः गावः संति तत्रेत्यर्थः। अयासः शुभरूपाः नित्या इत्यर्थः । ननु वैकुण्ठः श्रेष्ठः तत्राह तत् गोकुलं। उरुगायस्य विष्णोः वहुकीर्तेः श्रीकृष्णस्य भूरेः श्रेष्टा वैकुंठाच्च परमं श्रेष्टं यथा स्यात्तथावभाति राजत इत्यर्थः। "वैकुंठाच्च गरीयसीति" मथुरामाहात्म्ये । अतः सर्वावधित्वेन पुरुषार्थत्वेनोपासना कार्या। तत्र प्रमाणं प्रदर्श्यते । श्रीभागवते ब्रह्मणो वाक्यं - "तदस्तु मे नाथ स भूरिभागो भवेऽत्र वान्यत्र तु वा तिरश्चां । येनाहमेकोपि भवज्जनानां भूत्वा निषेवे तव पाद — पल्लवं" । यद्यपि भगवतो देशकालादिनिरपेक्षमेव पुरुषार्थत्वं तथा भक्ते भक्तस्य च तथापि भगवद्भक्तिभक्तानां देशकालादीनां चावधित्वाद्व्रजस्यैवावधिः । तदुक्तं सप्तमे नारदवाक्यं युधिष्ठिरं

प्रति—"यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियंति। येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिंगं॥ स वा अयं ब्रह्म महद्विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः॥ प्रियः सुहृद्वः खलु मातुलेय आत्मार्हणीयो विधिकृद्गुरुश्चेति"॥ श्रीधराचार्येण व्याख्यातं— अहो धन्यः प्रह्लादो येन भगवान् दृष्ट वयमल्पपुण्या इति तत्र श्रीकृष्णे युधिष्ठिरे अवधित्वमुक्तं। ब्रह्मादिजन्मतोपि व्रजे जन्मैव पुरुषार्थः इत्यत्र ब्रह्मवाक्यंम्—

"तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद्गोकुलेऽपि कतमांघ्रिरजोभिषेकं। यज्जीवितं तु निखिलं भगवन्मुकुंदस्त्वद्यापि यत्पदरजः श्रुतिमृग्यमेव"॥ संमोहनतंत्रे नारदवाक्यम्—

किं तु यद्गृहमेतस्याः पदचिन्हविभूषितम्।
तत्र नारायणो देवः सर्वदेवगणैः सह।
लक्ष्म्या च वसते नित्यं सर्वाभिश्चैव सिद्धिभिः॥
तथोत्तरे—स्थाने खिले भृग्वादीन प्रति ब्रह्मणो वाक्यम्—
षष्ठिवर्षसहस्राणि मया तप्तं तपः पुरा॥
नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये।
तथापि न मया प्राप्तास्तासां वै पादरेणवः॥

तथोद्धववाक्यं दशमे—"आसामहो चरणरेणुजुषामहं स्यां वृन्दाबने किमपि गुल्मलतौषधीनाम्। या दुस्त्यजं स्वजनमार्यपथं च हित्वा भेजुर्मुकन्दपदवीं श्रुतिभिर्विमृग्याम्॥" भृगुं प्रति ब्रह्मवाक्यं।

"तासां पादरजोस्त्येव नित्यं वृन्दाबने भुवि।
तत्प्राप्य तत्कामनया यात्यहो गोपिका गतिं।
नंदगोपव्रजस्त्रीणामतः पादरजो मया।
वांछितं पुत्रकाः सम्यक् ताः यतः श्रुतयो मताः॥

तथोद्धववाक्यं॥ "वंदे नंदव्रजस्त्रीणां पादरेणुमभीक्ष्णशः।

यासां हरिकथोद्गीतं पुनाति भुवनत्रयम् ॥
तत्र कतमांघ्रिरजोभिषेकमित्यत्र कतमस्य नाम नोक्तं ॥
" नंदगोपव्रजस्त्रीणां पादरेणूपलब्धये" इत्यत्र च नामानिरुक्तिः । " आसामहो चरणरेणुजुषामहं स्यामित्यत्रापि " तथा " तासां पादरजोस्त्येवमित्यत्र" च । तथा 'वंदे नंदव्रजस्त्रीणा'मुक्तिरन्यत्रापि । ततश्च गुणोपसंहारन्यायेन आगमपुराणसंहितादिभ्यो नाम ज्ञेयं । तथाहि आदिपुराणे कृष्णार्जुनसंवादे—

त्रैलोक्ये पृथिवी धन्या तत्र वृन्दावनं पुरी ।
तत्रापि गोपिका पार्थ तत्र राधाभिधा मम ॥

इति तु श्रेष्ठावधिः । पाद्मे निर्वाणखंडे नारदं प्रति सनत्कुमार-वाक्यं - वनं बृन्दावनं नाम नवपल्लवमंडितं ।
कोकिलभ्रमरैः नानापक्षिभिश्च मनोहरं ।
दृष्ट्वातिहृष्टो युत्तवः सर्व भूषणभूषयं ॥
सेषः स्वच्छ समोरागं मुदितं वेणुः वादितं ।

तत्रैव नारदवाक्यं—पूर्णपद्मपलाशाक्षं नातः परतरं मम । नित्यां मे मथुरां विद्धि वनं वृन्दावनं तथा । यमुनां गोपकन्यां च तथा गोपालवालकान् ॥
एवं च सामान्यतः व्रजोपासना व्रजस्थानां चोपासना सिद्धा पुरुषार्थत्वेन व्रह्मोद्धवबाक्ये । ततः इदानीं गुणोपसंहारन्यायेन यत्र यत्र येषा-मुपासनोक्ता नामानि च तत स्वतंत्र्या कृष्ण श्रीकृष्णव्रज परिवार-सहितमुपासनं ज्ञेयं । ततो वक्ष्यमाणक्रमेण ज्ञेयं । तथाहि पर्वत-ऋषिं प्रति नारदवाक्यं । योगभास्करे—तत्र नित्यं देवदेवः कृष्णः श्यामोऽतिसुन्दरः । चतुर्भुजः श्रिया सार्धं रममानोऽभिमोदते । एषा लक्ष्मी परा सूक्ष्मा कला तस्य हृदि स्थिता । रुक्मिणी पंकजकरा चि-द्रूपा सा तु तत्प्रिया । विद्यान्या योगमायाख्या लीलान्या वामपार्श्वगा । वहुधेशं निन्हुवाना राधा गौपी हरौ स्थिता । शाखाभेदेन ऋक् परि-

शिष्टे-'राधया माधवो देवो माधवेनैव राधिका। विभ्राजंते जनेष्वा।' तथा गोपालोपनिषदि-'कथं यास्यामो तीर्त्वा सौर्यम्। स होवाच मुनिः दुर्वासनं मां स्मृत्वा मार्गं दास्यतीति" तासां हि मध्ये श्रेष्ठा गांधर्व्वी ह्यु वाच॥

राधाया एव गांधर्वेति नाम श्रेष्ठत्वात्। तदुक्तमादिपुराणे—
त्रैलोक्ये पृथिवी धन्या तत्र वृन्दावनं पुरी। तत्रापि गोपिका पार्थ तत्र राधाभिधा मम। तथा गौतमीये नारदं प्रति पर्वतऋषिवाक्यं—
"अतः परं यथा देवो रासमंडलमध्यगः। इज्यते येन मंत्रेण तन्मे करुणया वदेति" तत्रैव-"गोकुलं गोपगोपीभिः गोवत्सैश्च मनोहरं। तत्रैव नारदं प्रति भगवद्वाक्यं—ब्रह्मणा शंकरेणापि न दृष्टं रमयापि यत्। तन्मे विक्रीडितं वत्स व्रजबालकदंबकैः। दिदृक्षसे भवत्वेवं यत्तेऽहं भक्तिदं नितः। ततो व्रजदेवीं दृष्ट्वा नारदः—लक्ष्मीः सरस्वती कीर्त्तिः गौराङ्गीः कान्तिरेव च। भवतीनां तुला नैव केनाप्यंशेन लभ्यते। श्री दशमे—"नायं श्रियोंग उ नितान्तरतेः प्रसादः स्वर्योषितां नलिनगंधरूचां कुतोऽन्याः। रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ लब्धाशिषां य उदगाद् व्रजबल्लवीनाम्।" नेमं विरिंच्यो न भवो न श्रीरप्यंग संश्रया। प्रसादं लेभिरे गोपी यत्तत्प्राप्य विमुक्तिदात्।' 'तत्प्राप्य दोषरहित एव जानाति नान्यः च। विज्ञंमन्यतयौद्धत्यमशास्त्रीयप्रवर्त्तनं। हठेनोत्पथगामित्वं दुर्विवेकतयात्त्वयः। बुद्धि भ्रंशः प्रमोषः स्यात् स च धीरैः द्विधोदितः। साधुमन्यतया साधुद्वेषो दंभत्वमित्यपि।' वृहद्गौतमीये—गोविंदवृन्दावने आवरणपूजाप्रस्तावे— "रक्तवस्त्रपरीधानां रक्तालंकारालंकृतां। श्रीराधां वामभागे च पूजयेद्भक्तितत्परः।" ततः मंत्रोद्धारं कृत्वा ध्यानमुक्तं—

"सुरूपा द्विभुजा चित्रवसनाभरणान्विता।
पुरुषः कृष्णः सर्वात्मा सा कीर्त्तिः सर्वदेवता॥

वराभयकरा ध्येया सेविता सर्वदेवतैः।
तद्बहिश्चाष्ट पत्रेषु पुर्वादिदक्षिणक्रमात ॥
रुक्मिणी सत्यभामां च मित्रविंदां च लक्ष्मणां।
कालिंदीं नाग्नजित्याख्यां ऋक्षजां पूर्वशालिकां ॥
सुतप्तकन्यकाभासगारूडोपलसंनिभाः।
नाम मंत्रान् समुच्चार्य नमोऽन्तान् क्रमतोऽर्चयेत् ॥
ततो नन्दं यशोदां च वसुदेवं च देवकीम्।
बलभद्रं सुभद्रां च यजेत्तत्तद्विधानवित् ॥
तद्बहिः पितरौ पूज्यौ ज्ञानमुद्रामयान्वितौ।
राधिकां भावयेन्नित्यं कृष्णाभेदस्वरूपिणीं ॥"

गर्गसंहितायां— "मैत्रस्य प्रथमे पादे कुर्याच्छांतिं समाहितेति।" अतः प्रतिमासं जन्मनक्षत्रे पूजा। तथोक्तं नारदपंचरात्रौ—गुरोरुत्क्रांतिदिवसे जन्मर्क्षे च तथा हरेः। इष्टिं च वैष्णवीं कुर्यात्सर्वदा भक्तिहेतवे। इति। कार्त्तिकमाहात्म्ये— "राधिकाप्रतिमां विप्राः पूजयेत्कार्त्तिके तु यः। तस्य तुष्यति तत्प्रीत्यै कृष्णो दामोदरो हरिः"। किं च "द्विजं दामोदरं कृत्वा तत्पत्नीं राधिकां तथा। कार्त्तिके पूजनीयौ तौ वासोलंकारभूषणैरिति।" काशीखंडे—नित्ये नैमित्तिके कृत्स्ने कार्त्तिके पापशोषणे। गृहाणार्घं मयादत्तं राधया सहितो हरे। पाद्मे दशाध्याय कार्त्तिके प्रबोधनीप्रसंगे—"ततः प्रियतमा विष्णोः राधिका गोपिकासु च। कार्त्तिके पूजनीया वै श्रीदामोदरसंनिधौ। किं यज्ञैः किं तपोभिश्च तीर्थैरन्यैश्च सेवितैः"। कार्त्तिके मथुरायां चोदर्यते राधिकाप्रियः। महागौतमीये नवीननीरदस्यांममितिस्तोत्रं संनिधौ॥ तुलसीदलयुगलं पादद्वये दक्षिणवामके। हयारियुगं पार्श्वद्वये गंधद्वयान्वितं। पद्मयुग्मं मूर्द्ध्नि देशे मूलेन दक्षवामके। षड्भिः सर्वतनौ न्यस्येत्पुनश्च सर्वैः सर्वतः॥

श्रीखंडं दक्षिणे दद्यात् सितपुष्पेण संयुतं ॥
वामे तु चंदनं दद्यात्तथा रक्तेन संयुतं ।
सर्वपुष्पांजलौ दद्यात् सर्वगंधसमन्वितं ॥
दक्षिणे वासुदेवाख्यं स्वच्छचैतन्यमव्ययं ॥
वामे तु राधिका नित्या चित्रवस्त्रगुणान्विता ॥

तथैव क्रमदीपिकायां । "पुष्पांजलिं वितनुयादथ पंच कृत्वः मूलेन पादयुगले तुलसीद्वयेन । मध्ये हयारियुगलेन मूर्द्ध्नि पद्मद्वंद्वेन षड्भिरपि सर्वतनौ च सर्वैः" । श्वेतानि दक्षभागे सितचंदनपंकिलानि कुसुमानि । रक्तानि वामभागेऽरुणचंदनपंकिलानि कुसुमानि ।यद्यप्यत्र श्रीराधानाम नोक्तं तथापि गुणोपसंहारन्यायेन वामभागः श्री राधायाः दक्षिणभागः श्रीकृष्णस्येति सांप्रदायिकाः ॥ बृहद्गौतमीयगोविंदवृंदावने । —

"पंच विंशति वारं च श्रीकृष्णं परि तर्पयेत् ।
अष्टौ महिषीः संतर्प्य राधिकां च प्रतर्पयेत् ॥

देवीनां च पृथक् पात्रे दद्याद्दिव्यान्नमुत्तममिति ।" पश्चात् ध्यानप्रस्तावे--"राधिकालापसंशक्तवामभागकृतादरं"। तत आवरणपूजामुक्त्वा सर्वपरिवाराणां मंत्रोद्धारः कृतः । तथाहि-स्वनामभिश्चतुर्थ्यन्तैः चतुर्द्वारि चतुः द्वयं चतुर्थ्यन्तं नमोन्तं च पश्चिमे च प्रपूजयेत् ।"श्रीकामस्तु यजेद्देव्या राधया परमेश्वरं । राधा लक्ष्मी न संदेहः कृष्णाभेदविधायिनी । तस्याः पूजनमात्रेण बृहदैश्वर्यवान् भवेत् । राधा प्रकृतिरेवोक्ता कृष्णस्तु भगवान् स्वयं । अनयोर्भेदनं नास्ति वन्हिदाहकयोरिव ।" यद्यपि राधालक्ष्म्योरभेद एवोक्तस्तथापि उपासनायां भेद एव । तदुक्तं भागवते-नायं श्रियोंग इति । नेमं विरिंच्यो इत्यादि । त्रैलोक्यसंमोहनतन्त्रे श्रीराधां दृष्ट्वा नारदवाक्यं--

"लक्ष्मीः सरस्वती कान्तिरित्याद्या या वरस्त्रियः ।

छायामपि स्पृशंत्यस्याः कदाचिन्नैव लक्ष्यते ॥
अस्याः संदर्शनादेव गोविन्दचरणांबुजे ।
या प्रेमद्धिरभूत्सा मे भूतपूर्वा न मे क्वचिदिति ॥"

तस्माच्छ्रीराधालक्ष्म्योर्भेद एव भवतु द्वयोरैक्ये तथापि शरीरं भिन्नमेव । यथावतारावतारिणोः । यथा च योगीश्वरकायव्यूहे । स्मार्त्त व्रतरत्नाकरनिबन्धे--

बाल्येऽपि भगवान् कृष्णस्तरुणं रूपमाश्रितः ।
रेमे विहारैर्विविधैः प्रियया सह राधया ॥

रुद्रयामले गोपालपटले--

भुजाद्वययुतः कृष्णो न कदाचिच्चतुर्भुजः ।
गोप्येकया युतस्तत्र परिक्रीडति सर्वदा ॥

श्रीराधासह क्रीडायां न कदाचिच्चतुर्भुज इत्यर्थः । वाराहपुराणे मथुरामाहात्म्ये--

स्नातस्तत्र तदा कृष्णो वृषं हत्वा स गोपकः ।
विपाप्मा राधां प्रोवाच कथं भद्रे भविष्यति ॥
तत्र राधा समाश्लिष्य कृष्णमक्लिष्टकारिणं ।
त्वन्नामा विहितं कुंडं कृतं तीर्थमदूरतः ॥
राधाकुण्डमिति ख्यातो सर्वपापहरं शुभं ॥
अरिष्टराधाकुण्डाभ्यां स्नानात्फलमवाप्नुयात् ॥

कार्त्तिकमाहात्म्ये--

गोवर्द्धने गिरौ रम्ये राधाकुण्डं प्रियं हरेः ।
कार्त्तिके बहुलाष्टम्यां तत्र स्नात्वा हरेः प्रियः ॥
नरो भक्तो भवेद्विप्राः तद्धितस्य प्रतोषणं ।
यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा ।
सर्वगोपीसु सैवैका विष्णोरत्यंतवल्लभा ॥।

तत्रैव प्रकरणांतरे—"चकार रासोत्सवनर्त्तनं सह वृन्दावनेऽ

न्याभिरपीह राधया । सा नृत्यमानाद्भुतगोपरूपिणी कृष्णेन जन्मांतरवांछितेन ।। राधा महाप्रेमजवाकुलेंद्रिया निन्येऽन्यलोकं कृपया कृतार्थतां ।"

आदिपुराणे कृष्णार्जुनसंवादे । —

न तथा मे प्रियतमो ब्रह्मा रुद्रश्च पार्थिव ! ।
न लक्ष्मी नैव चात्मा च यथा गोपीजनो मम ।।
न तपोभिर्न वेदैश्च नाचारैर्न च विद्यया ।
वशोऽस्मि केवलं प्रेम्ना प्रमाणं तत्र गोपिकाः ।।
अहमेवं परं रूपं नान्यो जानाति कश्चन ।
जानाति राधिका पार्थ ह्यंशानर्चति देवताः ।।
अहं ता गोपिकाः पार्थ ताश्च स्वयमहं भुवि ।।
उभयोस्तनुभिर्भेदः प्राणा एके न संशयः ।।
त्रैलोक्ये पृथिवी धन्या तत्र वृंदावनं पुरी ।
तत्रापि गोपिका पार्थ तत्र राधाभिधा मम ।।

आगमे—

वत्सैर्वत्सतरीभिश्च सदा क्रीडति माधवः ।।
वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे ।
रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने ।।

यथा वाराणस्यां भगवच्छक्तित्वेन विशालाक्षी तथा द्वारवत्यां प्रियात्वेन रुक्मिणी । यथा पुरुषोत्तमे क्षेत्रे अनंताः शक्तयस्तासु मुख्या शक्तिर्विमला तथा वृंदावने अनेकाः प्रियास्तासु राधा श्रेष्टाऽवधिभूतेत्यर्थः ।। तदुक्तं पाद्मे —

वृंदावनाधिपत्यं च दत्तं तस्याः प्रतुष्यता ।।
कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने ।।

अन्यत्र लक्ष्म्याः । भृग्वादीन् प्रति ब्रह्मणो वाक्यं । —

न स्त्रियो व्रजसुंदर्यः पुत्र ताः श्रुतयः किल ।
नाहं शिवश्च शेषश्च श्रीश्च ताभिः समा क्वचित् ।।

भृगुं प्रति ब्रह्मणः भगवद्वचनानुवादः—

पृथिव्यां भारते क्षेत्रे माथुरे मम मंडले ॥
वृन्दावने भविष्याश्च प्रेयस्यो रासमंडले ॥

कार्तिकमाहात्म्ये—

वृषभानुरिति ख्यातो गोपो नंदव्रजेऽभवत् ॥
तस्य कन्या वरारोहा राधा नामाभवत्पुरा ।
ततः प्रियतमा विष्णोः राधिका गोपिकासु च ॥
कार्त्तिके पूजनीया सा श्रीदामोदरसंनिधौ ॥

गर्गसंहितायां च--नाम्ना प्रतिष्ठिता विप्रनरभद्रेंद्भूषणेति । भविष्ये श्रीकृष्णयुधिष्ठिरसंवादे-- "गोपीनामानि राजेंद्र प्राधान्येन निबोध मे । गोपाली पालिका धन्या विशाखा ध्याननिष्ठिका । राधानुराधा सोमाभा तारका दशमी तथा" ॥ स्कादे युधिष्ठिरनारदसंवादे वसन्तोत्सवे एकसप्ततितमेऽध्याये--

राधा चंद्रावली भामा ललिता च तथा पराः ॥
सुशीला चंद्रभागा च विंध्यावल्यादयो नृपः ॥
वेषयित्वा मनोज्ञास्ताः वैष्णवैः सहितास्तदा ॥
ततो गच्छेत राजेंद्र वसंतानयनं प्रति ॥

कार्तिकमाहात्म्ये । —

व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम ॥
गृहाणार्घं मयादत्तं राधया सहितो हरे ॥

कार्तिके दामोदराष्टके--"नमस्तेस्तु दाम्ने स्फुरद्दीप्तिधाम्ने त्वदीयोदरायाथ विश्वस्य धाम्ने । नमो राधिकायै त्वदीयप्रियायै नमोऽनंतलीलाय देवाय तुभ्यं"। युगलसेवा पाद्मे एकोनत्रिंशोध्याये-

कुलजो वा तपस्वी वा वेदवेदांगपारगः ।
यज्ञदानपरो वापि सर्वतीर्थोपसेवकः ॥
व्रती वा सत्यवादी वा यतिर्वा ज्ञानवानपि ।

द्व्याधिकारी न भवेत् प्रयत्नेन विवर्जयेत् ॥

व्रतरत्नाकरे भविष्यपुराणे वाक्यं—

एकदा कार्तिके मासि पौर्णमास्यां महोत्सवः ॥
आसीन्नंदगृहे सर्वगोपीगोपसुखप्रदः ॥
सुतस्याभ्युदयार्थाय नन्दपत्न्या यशोदया ।
आकारितास्तत्र गोप्यः समाजहुः सुभूषिताः ॥
ताभिः समं हरिद्राद्भिः गन्धतैलादिभिस्तथा ॥
अभ्यषिञ्चत्सुतं साध्वी शंखतूर्यादिनिस्वनैः ॥
पीतेन वाससाच्छाद्य भूषयित्वा विभूषणैः ॥
ललाटे रोचनायाश्च तिलकं समकारयत् ॥
संभोज्य पायसं स्वादु नवनीतं सशर्करं ॥
स्वापयामास पर्य्यंके प्राणेभ्योपि प्रियं सुतं ॥
ततोऽतिप्रणयात्सर्वाः सुस्निग्धा गोपयोषितः ॥
विविधैरन्नपानाद्यैः दिव्यवासोविभूषणैः ॥
प्रीत्या सभाजयामास नन्दपत्नी यशस्विनी ॥
तस्मिन् दिने च तत्रैव सर्वास्ताः व्रजयोषितः ॥
ययुः कृष्णं प्रगायंत्यो यशोदाप्रीतिकाम्यया ॥
रत्नप्रदीपावलिभिरुज्वले भवनोत्तमे ॥
परिवार्य यशोदायाः सुतं प्रीतिविवर्द्धनं ।
गायंत्यस्तस्य कर्माणि पश्यंत्यस्तन्मुखांवुजं ।
परमानन्दमग्नास्तास्तां रात्रिं समयापयन् ॥
प्रभाते नन्दगृहिणीमामंत्र्य व्रजयोषितः ॥
कृष्णवक्त्रांवुजं दृष्ट्वा अंके कृत्वा पुनः पुनः ॥
मुहुः संचुंब्य संचुम्ब्य स्नेहवाष्पाकुलेक्षणाः॥
कथंचिदतिदुःखार्त्ताः स्वं स्वं भवनमाययुः॥
तस्मिन् दिने च भगवान् रात्रौ राधागृहं ययौ ॥

साच क्रुद्धा तमुदरे कांचीदाम्ना ववंध ह ॥
कृष्णस्तु सर्वमावेद्य निजगेहमहोत्सवं ।
प्रियां प्रसादयामास ततः सा तममोचयत् ॥
इदं प्रोवाच तां कृष्णः प्रेयसीं प्रीतमानसः ॥

कांची दाम त्वया तन्वि उदरे यन्ममार्पितं ।
दामोदरेति मे नाम प्रियं तेन शुभानने ॥
नातः प्रीतिकरं नाम मम लोकेषु विद्यते ।
नित्यमेतत्प्रजपतां सर्वासिद्धिर्भविष्यति ।

भक्तिं च दुर्लभां प्राप्य मम लोके महीयते ॥
उलूखले यदा मात्रा बद्धोऽहं भविता प्रिये ।
उदरे दामभिर्लोके तदाव्यक्तं भविष्यति ॥
अनेन नाममंत्रेण योऽस्मिन् मासि त्वया सह ।
मामर्चयेद्विधानेन स लभेत्सर्ववांछितं ॥

व्रजदेवीनां प्रधानसंख्या कृष्णोपनिषदि-"अष्टावष्ट सहस्रे द्वेप्यष्टावष्टाधिके स्त्रियः" । प्रह्लादसंहितायां एकादशेऽध्याये व्रजागतं उद्धवं प्रति "ललितोवाच---असत्यो भिन्नमर्यादः नित्यं क्रूरजनप्रियः । मा वै कृतास्मत्पुरतः कथा तस्यः कृतात्मनः । श्यामोवाच-किं तस्य मंदभाग्यस्य ह्यल्पपुण्यस्य दुर्मतेः । धन्योवाच--केनायं हि समानीतो दूतो दुष्टजनस्य च । विशालोवाच---न शीलं न कुलं यस्य ज्ञायते जन्म यस्य च । हीनस्य पुरूषार्थेषु तस्य संगो निरर्थकः । राधोवाच-भूतानां घातने यस्य नास्ति पापकृतं भयं । तस्य स्त्रीहनने साध्व्य शंका कापि न विद्यते । शैव्योवाच---सत्यं ब्रूहि महाभाग किं करोति यदूत्तमः । पद्मोवाच -- कदोद्धव महावाहुः नागरीजनवल्लभः । समेष्यतीह दयार्द्रः पद्मपत्रायतेक्षणः । भद्रोवाच--हा कृष्ण गोपप्रवर हे गोपीजनवल्लभ! । समुद्धर महावाहो गोपा, संसारसागरात् ।" भृग्वादीन् प्रति ब्रह्मणोवाच-न

स्त्रियो व्रजसुंदर्यः पुत्र ता श्रुतयः किल । नाहं शिवश्च शेषश्च श्रीश्च ताभिः समाः क्वचित् । गौतमीये गौतमं प्रति नारदवाक्यं-

गोकुलं गोपगोपीभिर्गोवत्सैश्च मनोहरं ।
तत्र लीला मया दृष्टा कृष्णस्याद्भुत कर्मणः ॥
पूतनास्तनपानादि शकटावर्त्तनादिकाः ॥
यत्र क्रीडति गोविंदो गोपनारीकदंबकैः ।

तत्रैव नारदं प्रति श्रीकृष्णवाक्यं—

ब्रह्मणा शंकरेणापि न दृष्टं रमयापि यत् ।
तन्मे विक्रीडितं वत्स व्रजबालाकदंबकैः ॥

सर्वगोपीकदम्बं प्रति नारदवाक्यं—

लक्ष्मीः सरस्वती कीर्त्तिः गौराङ्गी कान्तिरेव च ।
भवतीनां तुला नैव केनाप्यंशेन लभ्यते ॥

ततश्च व्रजदेवीनामुक्तिः नारदं प्रति—

इयं हि रोहिणी नामा ख्याता चेयं धनिष्ठिका ।
बिशाखेयं समाख्याता माधवीयं च विश्रुता ॥
मालतीयमियं श्यामा गोपालीयं शुभानना ।
रत्नलेखा पराख्याता सुभद्रा भद्ररेखिका ॥
सुमुखी सुरतिश्चैव चपला कुञ्जरीति च ।
कलावती रतिकला कलहंसी कलापिनी ॥

नारदोक्तिः गौतमं प्रति—सा च तत्प्रेयसी सर्वयुवतीकुलभूषणा । ब्रह्मसंहितायां—

सहस्रदलसंपन्ने कोटिकिंजल्कबृंहिते ।
भूमिश्चिंतामणिस्तत्र कर्णिकारे महासने ॥
समासीनं चिदानन्दं ज्योतिरूपं सनातनं ।
शब्दब्रह्ममयं वेणुं वादयंतं मुखाम्बुजे ॥
बिलासिनीगणावृतं स्वैः स्वैरंशैरभिष्टुते ।

भविष्यपुराणे—

गोपाली पालिका धन्या विशाखा ध्याननिष्ठिका ।
राधानुराधा सोमाभा तारकी दशमी तथेति ॥

अग्निपुराणे—

गोप्यः पप्रच्छुरुषसि कृष्णानुचरमुद्धवं ।
हरिलीलाविहारांश्च तत्रैकां राधिकां विना ॥
राधा तद्भावसंलीना वासनाया विरमितेति ।

भविष्योत्तरे—

मलयाचलसंपन्नं नानापन्नगरक्षितं ।
शीतलं बहुलामोदं चन्दनं प्रति गृह्यतां ।
मिलत्परिमलामोदं मत्तालिकुलसंकुलं ।
आनन्दनन्दनोद्यानं राधायै कुसुमं नमः ॥

तत्रैव प्रकरणांतरे—

दीपदानं ललितायाः पदं प्राप्तं पुरानघं ।
आसीच्चित्ररथो नाम बिदर्भेषु महीपतिः ॥
तस्य पुत्रशतं राज्ञः जज्ञे पंच दशोत्तरं ।
एकैव कन्या तस्यासील्ललिता त्वतिबल्लभा ॥
विष्णोः सर्वत्र विख्याता सहस्रं परिदीपकान् ।
प्रज्वालयत्यनुदिनं दिवां रात्रमनुक्षणं ॥

श्रीललिताजन्म भाद्रपदकृष्णाषष्ट्यां, अश्विनी नक्षत्रं, मेषलग्नः, नक्षत्रद्वयवृद्धिः, तिथिद्वयस्य ह्रासोऽनेन क्रमेण षोडशदिनज्येष्ठा इति केचित् । अस्मिन्मते तु भाद्रशुक्ल षष्ट्यां ।

तदुक्तं भविष्योत्तरे—

तत्रस्थां पूजयेद्देवीं पुष्पैस्तत्कालसंभवैः ।
चपलायै नमः पादौ चंचलायैच जानुनि ॥
कटिं कमलवासिन्यै नमः कान्त्यै नमो नमः ।

स्तनौ मन्मथवासिन्यै ललितायै भुजद्वयं ॥
उत्कंठितायै कंठं च माधव्यै मुखमंडलं ॥
नमः श्रियै शिरः पूज्यै दद्यान्नैवेद्यमादरात् ॥
ललिते ललिते देवि सौख्यसौभाग्यदायिनि ॥
या सौभाग्यसमुत्पन्ना तस्यै देव्यै नमो नमः ॥
सेयं भाद्रपदे मासि षष्ठी स्याद्भुरतर्षभेति ॥

इयमेव सूर्यषष्ठी ललिताषष्ठी च तत्र पूजा कार्या तदुक्तं नारदपंचरात्रे । —

विशेषपूजनं कुर्यान्पक्षे मासे च वत्सरे ।
पानात्समपानां च भक्तिसिद्धिमवाप्नुयादिति ॥

विशाखायाः आराधया सह समानतिथि मूहूर्त्ते जन्म । तदुक्तं संमोहनतंत्रे ॥ —

द्वे व मुख्यतमे गोप्यौ समानवयसौ शुभे ॥
एकव्रते एकनिष्ठे एकनक्षत्रनामनी ।
तप्तजांबूनदप्रख्या तत्रैकान्या तडित्प्रभा ॥

श्रावणप्रतिपदि कोकिलापूजनं । तदुक्तं भविष्योत्तरे कृष्णवाक्यं — तिलस्नेहलये सौख्यं तिलवर्णे तिलप्रिये । सौभाग्यं द्रव्यं पुत्रांश्च देहि मे कोकिले नमः । त्रैलोक्यसंमोहनतंत्रे-प्रविवेश ततो धीमान् नन्दसख्युर्महात्मनः । कस्यचित् गोपवर्यस्य भानुनाम्नो हि सुमहत् । वृषभानोः पुत्रः तेजस्वी । श्री दशमे तस्यैवोजस्वीति नाम । महातेजस्विने हृदा नारदायाभ्यवंदयत् । वृषभानुरिति शेषः । आराधां दृष्ट्वा नारदोक्तिः-"अस्याः संदर्शनादेव गोविंदचरणांबुजे । या प्रेमर्द्धिरभूत् सा मे भूतपूर्वा न मे कचित् ।" व्रजस्थानां परिवाराणामुपासना कार्या सा च स्वरूपचेष्टानामादीनामज्ञानान्न संभवति । तदर्थमयमारंभः प्रकारस्तु सद्गुरोर्ज्ञातव्यः ।

श्रीदशमे । —

श्रीदामा नाम गोपालो रामकेशवयोः सखा ।
सुवलस्तोककृष्णाद्याः गोपाः प्रेम्नेदमब्रुवन् ॥

श्रीराधाया वयः संमोहनतंत्रे । चतुर्दशाब्द वयसा ललितं ललितं परं । समानवयसश्चान्याः तदैव ब्रजबालिकाः । श्रीबृन्दावने अशोकपूजा । भविष्योत्तरे श्रीकृष्णवाक्यं—

अश्वयुक् कृष्णपक्षस्य प्रथमेऽह्नि दिनोदये ।
अशोकं पूजयेत् वृक्षं प्ररूढं शुभपल्लवं ।

प्रार्थना—

"अशोक शोकदमनो भव सर्वत्र नः कुले" ॥

पूजा तु श्रीगोवर्द्धनोपरि सुमनाख्यसरसि ।

संमोहनतंत्रे —

किंतु वृन्दावने काचिदस्त्यशोकलता शुभा ।
सर्वकालसुपुष्पाढ्या सर्वदिक्व्यापिसौरभा ॥
गोवर्द्धनाददूरेण सुमनाख्यसरस्तटे ॥ इति ।

कृष्णार्जुनसंवादे—

वैष्णवान् भज कौन्तेय मा भजस्वान्यदेवताः ।
पुनन्ति वैष्णवाः सर्वे सर्वं देवमिदं जगत् ॥

संमोहनतंत्रे—

अशोकमालिनी नाम्ना अशोकवनदेवता ॥
अशोकलतिकायां तु वसाम्यस्यां महामुने ॥
रक्तांबरधरा नित्यं रत्नमाल्यानुलेपना ॥
रक्तसिंदूरकलिता रक्तोत्पलवतंसिनी ॥
अत्रैव मिलिता गोपकन्यकाश्चित्रवाससः ।
अहं चाशोकमालाभिर्गोपवेषधरो हरिः ॥

कृष्णार्जुनसंवादे ।

ये मे भक्तजना पार्थ न ते भक्ताश्च ते जनाः ॥
मद्भक्तानां च ये भक्ताः मम भक्ताश्च ते जनाः ॥

ब्रह्मसंहितायां ॥

श्वेतद्वीपपतिं कृष्णं गोकुलस्थं परात्परं ।
सहस्रदलसंपन्ने कोटिकिंजल्कबृंहिते ॥
भूमिश्चिंतामणिस्तत्र कर्णिकारे महासने ।
समासीनं चिदानंदं ज्योतीरूपं सनातनं ॥
शब्दब्रह्ममयं वेणुं वादयंतं मुखांबुजे ।
विलासिनीगणावृतं स्वै स्वैरंशैरभिष्टुतं ॥

अथ वेणुनिनादस्य त्रयीमूर्तिमयी गतिः ॥" यद्यपि विलासिनीगणोत्र नोक्तस्तथापि ग्रंथांतराज्ज्ञेया । संमोहनतंत्रे श्री—

राधामुद्दिश्य नारदं प्रति गौतमवाक्यं--

तां देवीमद्भुताकारामद्भुतानंददायनीं ॥
हरेः प्रियां हिरण्याभां हीरकोज्वलमुद्रिकां ॥
कथं पश्यामि लोलाद्यां कथं वा तत्पदांबुजं ॥
श्रीराध्यतेऽतिभक्त्येति त्वया ब्रह्मन् विमर्शितं ॥

कियद्विलासनीनामोक्तिः—

सुनंदेति समाख्याता या वीणां विभ्रती करे ।
सुभद्रनाम्नो गोपस्य सुता भद्रेति विश्रुता ॥
यस्याः हस्ततले रम्यं व्यजनं परिदृश्यते ॥
सारंगनाम्नो गोपस्य कन्याभूच्छुभलक्षणा ।
रंगवतीति विख्याता निपुणा चित्रकर्मणि ॥
कन्या प्रचंडनाम्नस्तु गोपस्यातियशस्विनी ।
चित्रगंधाऽति विख्याता सुकुमारी शुभानना ॥
सुवीरनाम्नो गोपस्य सुते परमशोभने ॥
ययो हस्ते प्रदृश्येत सारिकाशुभवादिनी ॥
उपनंदस्य दुहिता नीलोत्पलदलच्छबिः ॥
सेयं कृष्णस्य दयिता पीतसाटी-परिच्छदा ॥

ख्याता चित्रकलेत्येव यस्या अंशे मनोहरा ॥
विपंची दृश्यते नित्यं सप्तस्वरविभूषिता ॥
एषाभिनंददुहिता रत्नचूडेति निश्रुता ॥

तत्रैव ॥ —

वामे हाटकसंनद्धां यष्टिमिष्टां सुशोभनां ॥

पूजयेदिति शेषः । हेमपद्मोपरि स्वैरं नृत्यंतं वनमालिनं । ध्यात्वैवमर्चयेत्पीठे पूर्ववत्पुरुषोत्तमं ॥ क्रमदीपिकायां रात्रिध्यानप्रस्तावे – पृथुं सुवृत्तं मसृणं वितस्तिमात्रोन्मतं कौ विनिखन्य शंकुं । "इति सम्यगमुं परिपूज्य हरिं चतुरावृत्तिरवृतमाद्र मतिः । रजता रचिते चषके ससितं सुसृतं सुपयोस्य निवेदयतु । विभवे सति कांस्यमयेषु पृथक् चषकेषु तु षोडश सु क्रमशः" । इयं तु परिपाटी विशेषतः युगलोपासकस्य युगलोपासना तु अतीव श्रद्धायुक्तेषु प्रकाशयेत् न सर्वत्र । उक्तं च तंत्रे - "गोपयेद्देवतामिष्टां गोपयेद् गुरुमात्मनः । गोपयेच्च निजं मंत्रं गोपयेन्निजमालिकामिति" । कृष्णोपनिषदि - वृंदाभक्तिः प्रियाबुद्धिः सर्वजंतुप्रकाशिनीति । बृहद्गौतमीये ऊनविंशे पटले - देवी कृष्णमयी प्रोक्ता राधिका परदेवता । सुरूपा द्विभूजा चित्रवसनाभरणान्विता । त्रैलोक्यसंमोहनतंत्रे–– तां देवीमद्भुताकारामद्भुतानंददायिनीं । हरेः प्रियां हिरण्याभां हीरकोज्वलमुद्रिकां ॥

भविष्योत्तरे ॥ —

अत्राप्युदाहरंतीमामितिहासं पुरानघ ॥
दीपदानाल्ललितया पदं प्राप्तं हरेः परं ॥
पीतबस्त्रेण हस्ताय श्वेतवस्त्रेण शूलिने ॥
कौशुंभपात्रेण कृते गौरीमुद्दिश्य दापयेत ॥

ईश्वरोवाच । —

प्रतिपत्क्रमयोगेन विहितस्य च या तिथिः ।

देवस्य तस्य यत्कार्यं तदशेषेण कीर्त्तय ॥

श्री कृष्णउवाच - वसंते किंशुकाशोक शोभिते प्रतिपत्तिथिः ।
अश्वयुक् - कृष्णपक्षस्य प्रथमेह्नि दिनोदये ॥
अशोकं पूजयेत्वृक्षं प्ररूढं शुभपल्लवं ॥
अशोक शोकदमनो भव सर्वत्र नः कुले ॥ इति —
इत्युचार्य ततो दद्यादर्घं श्रद्धासमन्वितः ।
वने व्रजे वा सद्धर्मं सीतया यः प्रदर्शितं ॥
मैथिली प्रांजलिर्भूत्वा शृण्वतो राघवस्य च ।
चिरंजीवतु मे वृद्धः श्वसुरः कौशलेश्वरः ॥
भर्ता मे देवरश्चैव जीवंतु भरतादयः ।
महीवृक्ष महाशाख मकरध्वजमन्दिर ।
प्रार्थये त्वां महाभाग वनोपवनभूषण ॥
ज्येष्ठे मासि सिते पक्षे प्रथमेऽह्नि दिनोदये ।
देवोद्यानभवं हृद्यं करवीरं प्रपूजयेत् ॥
आषाढ़पूर्णमास्यां तु संध्याकाले ह्युपस्थिते ।
संकल्पयेन् मासमेकं श्रावणे स्वःप्रवृत्तितः ।
स्नानं करिष्ये नियतं ब्रह्मचर्ये स्थितः सदा ॥
पुरुषः प्रतिपत्काले दंतधावनपूर्वकं ।
नद्यां स्नात्वाथ वाप्यां वा कोकिलां पूजयेच्छुभामिति ॥
पार्थ भाद्रपदे मासि शुक्लपक्षे दिनोदये ।
तृतीयायां चतुर्थ्यां वा श्रद्धया प्रतिवत्सरं ॥
उपवासेन गृन्हीयात् नाम्ना व्रतं च गोपदं ।
गावो ममाग्रतः संतु गावो मे संतुष्टयस्त्वतः ॥
गावो मे हृदये संतु गवां मध्ये वसाम्यहं ॥
अर्च्यंते तु यथा गावः तथा गोवर्द्धनो गिरिः ॥
पवित्राणां पवित्रत्वं काश्यपाः पच्यते श्रुतौ ।

शमी शमये पापंतन्यन्मयाद्दुरनुष्ठितमिति ॥

संमोहनतन्त्रे पंचमे पटले—

वामे हाटकसंनद्धां यष्टिमिष्टां सुशोभनां ।
हेमपद्मोपरि स्वैरं नृत्यन्तं बनमालिनं ॥
धात्वैवमर्चयेत्पीठे पूर्ववत्पुरुषोत्तममिति ।

क्रमदीपिकाध्यानप्रस्तावे-रजता रचिते चषके ससितं सुसृतं सुपयोऽस्य निवेदयतु । विभवे सति कांस्यमयेषु पृथक् चषकेषु तु षोडश सुक्रमशः । अतः परिवाराणां समानपंक्तावेव भोजनं विष्वक्सेनस्य तु पश्चात् । पाद्मे निर्वाणखंडे-"तत्र लीला मया दृष्टा कृष्णस्याद्भुतकर्मणः । पूतनास्तनपानादिशकटावर्त्तनादिका"। महाकाव्यादिषु लिखितं प्राचीनैः कविभिः तदपि नाम प्रमाणं यथारसार्णवसुधाकरे--कामवल्ली---सखि मम नियतिहतायास्तद्दर्शनभाग्यमस्तु वा मा वा । पुनरपि स वेणुनादो यदि कर्णपथे पतेत्तदेवालं"। इदानींतनानां कवीनां न प्रमाणं । गौतमीये-नवमे पटले-दक्षिणे वासुदेवाख्यं स्वच्छचैतन्यमव्ययं । वामे च राधिका नित्या चित्रवस्त्रगुणान्विता । संमोहनतन्त्रे-वामे हाटकसंनद्धां यष्टिमिष्टां सुशोभनामिति । त्रैलोक्यसंमोहनतंत्रे—

दिग्वाससं समालोक्य सोऽतिहर्षमवाप ह ।
संभाष्य गोपतिनन्दमयं सर्वप्रियः शिशुः ॥
प्रविवेश महाधीमान् नन्दसख्युर्महात्मनः ।
कस्यचिद्गोपवर्यस्य भानुनाम्नो गृहं महत् ॥
वृषभानुपुत्रः महा तेजस्वी ॥
महातेजस्विने हृदा नारदायाभ्यवंदयत् ।
अयं शिशुस्ते भविता सु सखा रामकृष्णयोः ।
बिहरिष्यति ताभ्यां च रात्रि दिवमनिंदितः" ।

तथोक्तं गर्गसंहितायां—

"तेजो बलकनिष्ठेयं वृन्दारण्याधिदेवतेति"। श्रीराधासेवनात्साहजिकी प्रीतिः श्रीकृष्णे भवतीति वैष्णवसेवनवत्—

अस्या संदर्शनादेव गोविंदचरणांबुजे ।
या प्रेमद्धिरभूत्सा मे भूतपूर्वा न कर्हिचित ॥
किंतु वृन्दाबने काचिदस्त्यशोकलता शुभा ।
सर्वकालसुपुष्पाढ्या सर्वदिग्व्यापिसौरभा ॥
गोबर्द्धनाददूरेण सुमनाख्यसरस्तटे ।
अशोकमालिनी नामा अशोकवनदेवता ॥
तां देवीमद्भुताकारमद्भुतानन्ददायिनीं ।
हरेः प्रियां हिरण्याभां हीरकोज्वलमुद्रिकां ॥
सुनन्दनाम्नो गोपस्य सुता भद्रेति विश्रुता ।
सारङ्गनाम्नो गोपस्य कन्याभूच्छुभलक्षणा ॥
रङ्गवतीति विख्याता निपुणा चित्रकर्मणि ।
कन्या प्रचण्डमातस्तु गोपस्यातियशस्विनी ॥
चित्रगंधेति बिख्याता सुकुमारी शुभानना ।
सुबीरनाम्नो गोपस्य सुते परमशोभने ॥
तप्तजांवूनदप्रख्या तत्रैकान्या तडित्प्रभा ।
उपनन्दस्य दुहिता नीलोत्पलदलच्छविः ॥
सेयं कृष्णस्य दयिता पीतशाटीपरिच्छदा ।
रक्तचेलिकयाच्छन्न शातकण्ठ घटस्तनी ॥
सुरादिसेवितपदा सुधामधुरनामिना ।
सेयं वलाविलेः पुत्री कृशांगी कुड्मलस्तनी ॥
मुक्तावलिलसत्कण्ठा शूक्ष्मकौशेयवासिनी ।

गौतमीये—

तद्वहि वसुदेवं च यशोदां देवकीं पुनः ।
बसुदेवो हेमगौरो वराभयकरस्थितः ॥
देवकी श्यामा सुभगा सर्वाभरणशोभना ।
सितवस्त्रयुगाढ्या च सर्वेप्सितफलप्रदा ॥

यशोदा हेमसंकाशा सितिवस्त्रयुगान्विता ।
सर्वाभरणसंदीप्ता कुण्डलोद्भासितानना ॥
रोहिणीं च यजेत्तथा नंदं गौरं समर्चयेत् ॥
तद्बहिः पितरौ पूज्यौ ज्ञानमुद्राऽभयान्वितौ ॥
स्वर्णपांडुरवर्णौ तौ विस्मयोत्फुल्ललोचनौ ।
मातरौ श्यामगौरे च नानाभरणभूषिते इति ॥

प्रकरणांतरे सारदातिलके ॥ —

अनंगरूपान्यानंगमदनानंगमन्मथा ॥
अनंगकुसुमा पश्चादनंगमदनातुरा ॥
अनंगशिशिरानंगमेखलानंगदीपिका ।
संपूज्याः पत्रमध्येषु शक्तयोऽष्टौ यथा-क्रमं ॥
युवतिर्विप्रलंभान्या ज्योत्स्ना सुभ्रूर्मदोद्भवा ।
सुरता वारुणी लोका कान्तिः सौदामिनी पुनः ॥
कामछत्रा चंद्रलेखा शुकास्योन्मदना पुनः ॥
योनि र्मायावती ताः स्युः कल्हारविकसत्कराः ॥
बहिः षोडश पत्रेषु पूज्या षोडश शक्तयः ॥
माधवी मालती पश्चात् हरिणाक्षी मदोत्कटा ।
चतुरस्रस्य कोणेषु पूज्यास्तत्परिचारिकाः ॥
परभृत्सारसौ पश्चात् शुकमेघाह्वयौ पुनः ॥
अपांगभ्रूविलासौ द्वौ हावभावौ प्रकीर्तितौ ॥

गर्गसंहितायां--

चंद्रगोपसुता कांता अनुराधा महामतिः ।
पंचयोजनविस्तीर्णमुज्वलं राधिकावनं ॥
तेजो बल कनिष्ठेयं वृन्दारण्याधिदेवतेति ।

सारदातिलके अष्टादशाक्षरबीजोद्धारपीठमन्त्रे--

मोहनी क्षोभनी त्रासी स्तंभिन्याकर्षिणी पुनः ।
द्राविन्याह्लादिना क्लिन्ना क्लेदिन्यः पीठशक्तयः ॥

त्रासि त्रासिता। एतास्तु स्थानाधिकृताः॥ असाधारणं चिह्नं मुद्रा च श्रीराधायाः। तथोक्तं वृहद्गौतमीये।—

राधामुद्रा सदा ध्येया सर्वसंपद्विधायिका॥
हस्तौ तु सन्मुखौ कृत्वा प्रश्रितांगुलिकौ तथा॥
तर्ज्न्यौ मध्यमा पृष्ठे अंगुष्ठौ मध्यमाश्रितौ॥
राधामुद्रेयमाख्याता सर्वदैव प्रियंकरीति॥

यद्यपि मुद्रां न दर्शयेत् "गुरुं प्रकाशयेत् विद्वान् मंत्रं नैव प्रकाशयेत्। अक्षमालां च मुद्रां च गुरोरपि न दर्शयेदित्यादि।" तथापि सस्नेहं शिष्यं प्रति उपदिशेत्। गुरौ प्रीतिस्तु आत्मनिवेदनादिना ज्ञेया। गर्गसंहितायां—

षट् कोणं च दशारं च वलयैकेन संयुतं।
अंकुशानि पताकानि सुवृत्तं तोरणानि च॥
मस्तके स्वस्तिकं शुभ्रं सर्वसौभाग्यदायकं।
नाभेरधः कुंकुमाभं लक्ष्म ज्ञेयं द्विजोत्तम॥
सुरेखा नाम तद्धात्री चामृतस्राविनी मता।
शस्ता च सुमुखी चैव सुभद्रा कैरवी तथा॥
इंदवी कुंतजाख्याता यशोदा रोहिणी शुभा।
सर्वभद्रपदा धन्या एकादश सखीयुता॥ इति॥

पुरश्चरणचंद्रिकायां —

चक्रमुद्रां तथा कृत्वा मध्यमे द्वे प्रसार्य च।
कनिष्ठिके तथानीय तदग्रेऽङ्गुष्ठकौ क्षिपेत्॥
लक्ष्मीमुद्रा पराह्येषा सर्वसंपत्प्रदायिनीति।

योनिमुद्रा —

मिथः कनिष्ठिके वध्वा तर्जनीभ्यामनामिके॥
अनामिकोर्द्ध्वसंश्लिष्टदीर्घमध्यमयोरधः।
अंगुष्ठाग्रद्वयं न्यस्येत योनिमुद्रेयमीरितेति॥

रामार्चनचंद्रिकायां—"योनिमुद्रा समाख्याता संकोचितकरा तथा। तर्जन्यांगुष्ठमध्यांता स्थिताऽनामीकयुग्मिका। मध्यमूलं स्थिताऽंगुष्ठाग्रे यं शस्तार्चने मुने।" मुद्राचिन्हादि भावनया तत्तल्लीलाध्वनेश्च। मुरलीयं ध्वनिः व्रजदेवीनां नूपुरध्वनिः। रघुवीरोपासने धनुषो ध्वनिः। श्रीसीताया उपासने नूपुरस्य। नृसिंहोपासने तथैव ध्वनिः। तदुक्तं योगभास्करे - तावदंतः स्वनः श्रूयाद्यावल्लीला दृशि न हि। बृहद्गौतमीये-तत्पदं मां तु जानीहि त्वं पदं पुरूषर्षभ। क्रियारूपेण सा प्रोक्ता द्वयोः समरसात्मता॥ त्रिधाशक्तिरैश्वरे रूपे न तु रसात्मके कृष्णे।

तदुक्तं बृहद्गौतमीये —

ज्ञानशक्तिः कियाशक्तिरिच्छाशक्तिस्तथैव च।
त्रिधा-शक्तिः स्थिती यत्र तत्परं ज्योतिरव्ययं॥
मंत्रार्थं न च चैतन्यं राधामुद्रां न वेत्ति यः।
शतकोटिजपेनापि कथं सिद्धिर्भवेन्मनोः॥
अथ वृंदावनं ध्यायेत् हरेरव्यक्तचेतसः।
धाम तत्परमानंदरूपं सर्वनिकेतनं॥

शारदायां —

शोको मोहो बिलासोऽन्यो विभ्रमो मदनातुरः।
अपत्रपो युवा कामी चूतपुष्पो रतिप्रियः।
ग्रीष्मस्तपांतः ऊर्जोऽन्यो हेमाक्तः शिशिरो मदः॥

अयं विवेकः—मधुरलीलायां वृंदावनमेव नियतं स्थानं, बृहद्वनं बाललीलाधिकरणं भांडीरवनं च, तत्र गोष्ठं गवां वासः कादाचित्कः न तु व्रजं। बृहद्वनाद्वृन्दावनं प्राप्तस्य श्रीनंदस्य नियतं स्थानं नंदीश्वर एव गोष्ठं तु कदाचित् यमुनातीरे कदाचित्कालियह्रदे तत्रापि कालियदमनानंतरं कादचित्कं। एवं च नंदीश्वरस्य चतुर्दिक्षु गवां वसतिर्ज्ञेया।

तदुक्तं हरिवंशे—

बने विचरतोर्मासौ वातिक्रांतौ च वार्षिकौ ।
व्रजमाजग्मतुस्तौ तु व्रजे शुश्रवतुस्तदा ॥

इन्द्रमहोत्सवस्वभि । इदानीमपि चातुर्मास्ये भिन्नं भिन्नं गोष्ठं भवति । यथा नन्दीश्वरतः पश्चिमभागे नन्दकूपः नन्दहेर इति ग्रामश्च । तदुक्तं हरिवंशे—

श्रूयते हि बनं रम्यं पर्याप्ततृणसंस्तरं ।
नाम्ना वृन्दाबनं नाना स्वादुवृक्षफलोदकं ॥
तत्रापि कल्प्यतो घोषः त्यजतां निर्गुणं बनं ।

निर्गुणं बनं वृहद्वनं बिघ्नवाहुल्यात् । तत्र गोवर्द्धनश्चैव भांडीरश्च बनस्पतिः । तत्र व्रजवर्णनं—

शकटावर्त्तपर्यन्तं चंद्रार्द्धाकारसंस्थितं ।
मध्ये योजनविस्तारस्तावद्विगुणमाततं ॥
कीलैरारोप्यमाणैश्च दामनीयाशसंयुतैः ।
तद्व्रजस्थानमधिकं शुशुभे काननावृतं ॥

तत्र संकेतवटवर्णनं हरिवंशे –

तासु कृष्णो मुदं लेभे सौम्यासु वनराजिषु ।
स कदाचिद्वने तस्मिन् गोभिः सह परिव्रजन् ।
ददर्श विपुलोदग्रं शाखिनं शाखिनां वरं ॥
स्थितं धरण्यां मेघाभं निविडं दलसंचयैः ।
भवनाकारविटपं लतापुष्पसुमंडितं ॥
आधिपत्यमिवान्येषां तस्य देशस्य शाखिनां ।
न्यग्रोधं पर्वताग्राभं भांडीरं नाम नामतः ।
दृष्ट्वा तत्र मतिंचक्रे निवासाय जगत्पतिः ॥

भांडीरः वटः न्यग्रोध इति पर्यायाः । ततश्च यमुनाया परे पारे सन्निभः । तदुक्तं हरिवंशे–न्यग्रोधो योजनोच्छ्रितः इत्यादि—

ततश्च वंशीवटो भांडीर नामा गोवर्द्धनप्रदेशे रासस्थले, द्वितीयः यमुनापारे, तृतीयः प्रथम रासस्थले पुष्करिणी—निकटे यमुनातः पश्चिमभागे बलिहराग्रामे, चतुर्थः दधिग्रामे, केचित्तु राधावादित-वेणुध्वनिहेतुना राधा-वंशीवटं वर्णयन्ति, गोवर्द्धनप्रदेशे। तदुक्तं त्रैलोक्यसंमोहनतन्त्रे—

यस्या हस्ते च वंशीयं दृश्यते हरिणार्पिता।
वेणुवाद्येऽतिनिपुणा केशवस्यातितोषिणी॥
परोक्षे वापि कृष्णस्य कृष्णकान्ता स्मरार्दिता।
सखिभिर्वादयन्तीभिः गायन्ती सुस्वरं स्वयं॥
नर्त्तयेत्प्रियवेषेण वेषयित्वा बधूरिमामिति॥

——:०:——

## श्री श्रीनारायणभट्टपादाः

श्री श्रीजीवगोस्वामिकृता

# अनर्पितचरीं चिरादितिश्लोकस्य व्याख्या

अनर्पितचरीं चिरात् करुणयावतीर्णः कलौ
समर्पयितुमुन्नतोज्ज्वलरसां स्वभक्तिश्रियम् ।
हरिः पुरटसुन्दरद्युतिकदम्बसन्दीपितः
सदा हृदयकन्दरे स्फुरतु वः शचीनन्दनः ॥

ओं नमः श्रीगौरचन्द्राय । श्रीनित्यानन्दाद्वैतचन्द्राय नमः । अत्यन्तागतिकगतिदानाय, निजप्रेमरत्नरक्षणयत्नोद्गतस्वकार्पण्यदोषदूरीकरणाय, तद्दाने तदास्वादनमिति तत्वप्रकाशनाय, प्रेयसीमहाभावस्वरूपश्रीराधिकातत्वज्ञापनाय, तत्प्रेममहिमतत्वतत्तदास्वाद्यस्वमधुरिमतत्तच्चेतोमात्रानुभूतस्वमाधुरीसंकलनसौख्यास्वादाय च अविशेषविशेषभक्तवर्गवासनाविषयप्रेमाम्बुधिपीयूषकरणकतदभिषेचनाय, तद्द्वारा जगदभिव्यापनाय, श्रीश्रीराधादास्यमात्रलभ्यानन्यलभ्यव्रजसुमधुरप्रेमप्रकाशनाय,तस्याः सर्व्ववरीयस्त्वप्रकाशनाय च प्रेमसागरावलम्बननवधाभजनक्रमरूपे श्रीलनवद्वीपे श्रीमन्नन्दनन्दनः श्रीकृष्णचन्द्रो रसिकशेखरः स्वप्रेयसीवरभावकान्तिसम्वलितः परमकरुणामयोऽवतीर्ण इति । चन्द्रग्रहणसमये हरेकृष्णेति नाम संग्राहयन्नेव चन्द्रग्रहणप्रकारः । यतो हरति स्वभावकान्तिविलासैः श्रीकृष्णस्य चित्तमिह पुन वर्णदेहादिकं हृत्वा स्वस्वभावं तं करोति या सा राधा इत्यर्थः । तथा कर्षति गुणैस्तदीयानां चित्तमिह पुनः सर्वाग्रगाश्रीराधाया वर्णभावादिकमिति कृष्ण इत्यर्थः । नामव्युत्पत्तिसीमा तत्रैव दर्शितः ॥ १ ॥

तत्र दातुस्वभावोऽयं मिष्टद्रव्यभक्षणसमये अन्येभ्यो न दत्वा स्वबन्धुभ्यो न विभज्य स्वयमेव नाश्नाति अतः आपाम-

रेभ्योऽपि निरूपमप्रेम दत्वा सर्वधाम-सर्वावतारकपरिकरानेकत्री-कृत्य प्रेम महोत्सवं करोति इति तत्रत्यान् एत्य विशेषाभिज्ञः श्रीमान् गोस्वामी प्रभुर्नाटकादौ नान्दीरूपेण जगदाशीर्व्यञ्जनया निरूपयति - अनर्पितमिति ।

श्रीशचीनन्दनो हरिर्वो युष्माकं हृदयकन्दरे स्फुरतु । यथा सिंह-प्रतापेन करिमदोऽपगच्छति तथा अस्योदये युष्माकं विषयादि-मदमत्तकरिरूपं मनः शान्तं भावीति ध्वनिः । स यथा संघातको नायं तथा किन्तु शोधक एव । किं कर्त्तुमवतीर्ण इत्यत आह । पूर्व्वानर्पितां निजभक्तिसम्पत्तिं तथा उन्नतोज्वलरसां कलौ सर्व-साधनहीनेभ्योऽपि दीनेभ्यो दातुं तथा तदर्थं पुरटसुन्दरद्युति-रिति श्रीराधासाम्यमेव । तत्रातोऽनन्यत्वज्ञापनाय च तदीयरूप-भावाविष्करणं निगूढ़प्रेम्नो बहिष्करणेनान्तर्निगूढ़कनकरुचेरपि वहिः प्रकाशः स्वयमेवागतः । प्रेम साररूपत्वात् श्रीराधाया इति पीतरुचित्वमवगम्यते, तन्निमग्नत्वात् श्रीनित्यानन्दप्रभुप्रभृतीनामपि गौरत्वमेव । तत्र प्रमाणानि तावल्लदयन्ते --

रसज्ञाः श्रीबृन्दाबनमिति यमाहुर्वहुविदो
यमेतं गोलोकं कतिपयजनाः प्राहुरपरे ।
श्वेतद्वीपं प्राहुः परमपि परव्योम जगदु
र्नवद्वीपः सोऽयं जयति परमाश्चर्य्यमहिमा ॥

कस्यचित्—

बिशुद्धाद्वैतैकप्रणयरसपीयूषजलधौ
घनीभूते द्वीपे समुदयति बृन्दाबनमहो ।
मिथः प्रेमोद्घूर्णद्रसिकमिथुनाक्रीड़मनिशं
तदेवाध्यासीनः प्रविशति पदे क्वापि मधुरे ॥

इत्यत्र द्वीपाख्या-प्रकाशनाय श्रीनवद्वीप इति नाम । एतेन श्रीबृन्दाबनरूपप्रकाशप्रेमघूर्णनप्रकारादिकमपि अधुनैव प्रकाशित-

मिति ज्ञेयं । यद्वा अत्यन्तागतिकगतिदानाय निजप्रेमरत्नरत्नणयत्नो-
द्गतस्वकार्पण्यदोषापवादापवादात् तद्दाने तदास्वादनमिति तत्व-
प्रकाशनाय तत् परीपाकावधि-व्रजबधू-शिरोमणि-श्रीवृषभानु-
नन्दिनी-स्वमाधुरीधुरीणतामात्रानन्तरान्तर्गतरसास्वादाय च अशेष-
विशेषभक्तवर्गबासनाबिषयप्रेमामृतेनाभिषेचनाय तद्द्वारा जग-
दभिव्यापनाय च प्रेमसागरावलम्बन-नवधा भक्तिरूपे श्रीनवद्वीपे
श्रीव्रजराजकुमार: स्वप्रेयसीवरस्वभावकान्तिसन्दीपित: श्री-
कृष्णचन्द्रोऽवततार । यदा तां चन्द्रमुखीमाकलय्यैव चन्द्र इति
तद्ग्रहणसमये विश्वलोकमुखेन श्रीकृष्णेति नामावलीं ग्राहयन्नेव,
विचक्षणाशिरोमणिरेषा वैदग्धीति । यतो हरे इत्यस्य हरति स्वभा-
वकान्तिभ्यां श्रीकृष्णस्य चित्तमिति पुनरत्र वर्णाभावादिकमिति
व्युत्पत्त्या श्रीराधे इत्यर्थत्वात् । अतस्तदनुगतरूप: श्रीरूपो मत्प्रभु-
र्जन्मादिलीलां सप्रयोजनिकामेकेन पद्येनैवाह । अनर्पितचरी-
मिति । श्रीशचीनन्दनो हरिर्वो युष्माकं हृदयन्दकरे करुणया स्फुरतु
इत्यन्वय: । ननु शचीनन्दनाबतारस्तु दशावतारादौ न श्रूयते
कदा बाबतीर्ण: पूर्णोऽंशो वा कथं बा केन वा किं वर्णो वा लीला
वा केत्यत आह कलौ अबतीर्ण इति । कलौ वैवस्वतमन्वन्तरीया-
ष्टाबिंशतिचतुर्युगीय चतु: सहस्रसप्तशतवर्षमितकलियुगांशे चतु-
र्दश शत सप्त संख्ये शाके फाल्गुनीपौर्णमास्यां पूर्व्वफल्गुनीनक्षत्रे
इति सर्वथा परिपूर्णरूपेण अबतीर्ण इति स्वयमेव प्रायस्व-
प्रयोजनायाबतीर्ण: प्रकटो नतु ब्रह्मणा प्रार्थितो न वा
दैत्यबिनाशाय इति । "कृष्णवर्णं त्विषाकृष्ण" मिति श्रीभाग-
बतात, "पौर्णमास्यां फाल्गुनस्य फल्गुनी ऋक्षयोगत: ।
भविष्ये गौररूपेन शचीगर्भे पुरन्दरात्" इति बायव्यात् "सुवर्ण
वर्णो हेमाङ्गो वराङ्ग" इति महाभारतात् । "नि:स्वाध्यायबषट्कारे
स्वधास्वाहाविवर्जिते । तत: प्राबिरसौ बिप्र: क्वचिल्लोके भविष्य-
तीति" विष्णुपुराणात् । "हिरण्यवर्णं ब्रह्मयोनिमिति" श्रुतेश्च ।

पूर्णोऽवतारीति नावतारगणनायां गणितः। यदा श्रीकृष्णोऽवतरति तदैवायमवतरतीति नियमात्। स एवायमिति न पृथगुपादानम्। ननु यदि श्रीनन्दनन्दनोऽयं तस्य तु श्रीवृन्दावनलीलायाः परं सौख्यं नास्तीति तदेव माथुरविप्रलम्भादिकमुद्भाव्य गाढ़ावेशेनाधुनापि समृद्धिमत्सम्भोगेन मादनभावेनात्मकान्तया तया कान्तिमत्या श्रीवृन्दावने निजरूपविकारैः ललितादिसखीवर्गैस्तामेव लीलां करोतीति किं कृत्त्वमत्रागतस्तदात्राह—स्वभक्तिश्रियं समर्पयितुं स्वभक्तिसम्पदस्तावत्त्रिविधाः रूप्यस्वर्णादिमुद्रात्मिका इन्द्रनीलादिमण्यादिरूपाश्चिन्तामणिरूपाश्च । साधनभावप्रेमभेदेनेति चरमकक्षाप्राप्ता या एव स्वयमात्मारामेण बिना तद्दानाभावात्। तथा च "दुर्लभालोकयोर्यूनोः पारतन्त्र्याद्वियुक्तयोः। उपभोगातिरेको यः कीर्त्यते स समृद्धिमान॥" इति नितान्तपारतन्त्र्यगमनञ्च ऐक्यं बिना न सम्भवतीति तस्या अपि अनपेक्ष्यत्वात् नितान्तात्मरामत्वञ्च ऐक्यं विना नेति "सर्वभावोद्गमोल्लासी मादनोऽयं परात्परः" "योग एव भवेदेष विचित्रः कोऽपि मादनः" इति नितान्तयोगोऽपि नैक्यं बिनेति। अत्रैवात्मनि तया समृद्धिमतसम्भोगेन मादनेन च रमते अतएव पात्रापात्रविचारणं न कुरुते महानन्दसीमास्थः प्रेमोन्मत्तो जगदपि मादयतीति। न चेदमनुचितमेव यत् पात्रापात्र-बिचाराभाव इति वाच्यम्। विश्वजयानन्तरं महाराजाधिराजगमनागमने तत् परिकरैरानन्देन स्वस्वहस्तद्वयेनापि धनानि पार्श्वद्वये विकीर्य्यैव गम्यते इति व्यवहारात् न ग्लानिकरमिदं तस्यापि तु महैश्वर्य्यप्रकाशकमिति अस्यापि महाकृपालुत्वप्रकाशकमेव । यन्नित्यानन्देन तन्महाधनप्रेमवितरणं न पुनर्हरणमिति। नन्वहो किमुच्यते भवता प्रल्हादाम्बरीषहनुमद्बिभीषणपाण्डवादिभ्यः प्रेमदानाद् अस्य तद्दानं नाधुनिकं युगे युग एव दृश्यते इत्यत आह अनर्पितचरीमिति पूर्ब्बमनर्पिता तत्र तत्र तत्तद्भक्तकृपया तदनु तेषां निष्ठया

तैर्व्वलेनैव नीतत्वात् किं तस्य दातृत्वं राजा बलेन महाकृपणस्य धनानि नेतुं शक्नोति तदा किं तस्य दातृत्वं यदि शत्रुमित्रोदासीनेभ्यः हिताहितानुसंधानं बिना जगाइ माधाइ प्रभृतिवत् सर्व्वत्रैव दातुं शक्यते तदा दानं शस्यते अन्यथा किं तेनेति भावः। ननु पूतना लोकबालघ्नीत्यादौ तथा दर्शनमपि अतएव आह–उन्नतोज्वलरसामिति उन्नतः गोपीभावेन परमोत्कर्षकक्षां प्राप्तः उज्वलो मधुरो रसो यस्यामिति सतु गोपनेन सम्पुटे स्थापितोऽस्ति "मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति" न्यायेनास्य रसस्य तु तत्रातिगोप्यत्वमिति भावः। नन्वहो किमानन्दः किमानन्दः तदायं कथं पूर्व्वं नावतरत् इत्यत आह चिरात् करुणयेति अयं नवद्वीपनाथः सदैवेदमपेक्ष्य स्थितः स्वच्छा महासाधका बहवो भवन्ति कस्यापि यदित्थं भाग्यं जायते तदा तद्बलम्व्यैव जगतीदं बितरिष्यामीति। तत्र कस्यापि ईदृशं भाग्यं न जातं तदा करुणाप्रेरित एव कलौ अनन्यगतिकदीनहीन-जनालोचनेन प्रादुर्व्वभूवेति चिरकालानन्तरमिति भाबः। नन्वद्वैतहुंकारः कारणत्बमस्य कुतः करुणया-तथा च "अद्वैतप्रकटीकृत" इत्यादि प्रमाणेन गङ्गायां तुलसीपत्रं दत्वा पाषण्डजनवृद्धिवैष्णवजनसन्तापेन भगवत्प्रत्यासत्तिमपश्यता हुंकारं कुर्व्वताद्वैताचार्यगोस्वामिना परमसदाशिवेन भुव्यानीतोऽयमिति। तथापि भजनेन पश्यति, ज्ञानेन जानाति, तपसानुभवति प्रेम्णा बशीकरोति, किं पुनर्यशोदया उदूखले बद्ध इत्यादि सर्व्वत्रैव तत् करुणा मुख्यप्रयोजिका गण्यते। यथा "कृपयासीत् स्वबन्धने" इत्यादि प्रमाणेन यथा च भगवतः सर्व्वागम्यत्वमुक्त्वा पश्चात् "येषां स एव भगवान् दययेदनन्त" इत्यादिना दयामात्रप्राप्यत्वं तस्य निर्द्धारितं। तथा च अकाण्डे प्रकाण्डहुंकारेण प्रलयकर्त्तुर्म्महारुद्रस्याद्वैताचार्य्यस्य लोका निद्यन्तीति झटित्युत्थया करुणयैव भगवतः प्रादुर्भूतत्वमिति भावः। ननु भो! श्रीकृष्णेनापि दण्डकारण्यवासिमुनि-श्रुतिकन्या-गायत्री–

प्रभृतिभ्यो ब्रजे गोपकन्यारूपिणीभ्यो गोकुलचन्द्रेनापि उज्ज्वलरसम प्रदानं कृतमिति श्रूयते "कृष्णादन्यः को वा लतास्वपि प्रेमदोप भवति" इत्यादि प्रमाणेनायोग्येभ्योऽपि तस्य प्रेमदातृत्वञ्च। सत्य भोः स एव ब्रजराजकुमारोऽयं तेनाने भेदविवक्षायां किं प्रयोजन किन्तु अन्तःपुरे महाराजा कल्पतरुरूपेण सर्व्वस्वमपि ददातीत्युक्तेऽपि ऽपि न दातृत्वं यदि दीनहीनपतितादिभ्योऽदेयमपि दीयते महादा तृत्वं तदैव "अपि च कृपणपक्षे ह्युत्तमः श्लोकशब्दः" इति स्मरण णात्। ननु ईदृश प्रेमरत्नानां स्थापनागारानि भुवि कति प्रकाशित नानि येभ्यो नीत्वान्यदापि सुकृतिनः प्रेमधनिनो भवन्ति? सत्यं अष्टादशसहस्रसंख्यकश्लोकाः श्रीमद्भागवतीयाः सन्ति यच्छ्रवण मात्रेणापि प्रेमा जायते यस्यां वै श्रूयमाणायामित्यादि बचनात् स्वयमेव तद्रूपतया तया ददातीति न चित्रं। ननु को बाध्यक्षः को वा कोषद्वाररक्षको द्वारि कपाटादिकं किं नास्ति? अस्ति योऽध्यक्षः श्रीनित्यानन्दः स तु हस्तद्वयेन ददाति तस्मादपि विचाररहितः प्रेमकादम्बिनीमत्तत्वात्। यस्तु द्वाररक्षकः श्रीसनातनः सतु पूर्व्व स्थितमपि कवाटकीलकादिकं वैष्णवतोषण्यादि रूपेणोन्मुच्याह्व यति "आगच्छ भ्रातरेतस्मिन प्रेमाम्बुधिनिमज्जने। यत्सौख्यमनु भूयेह तुच्छ ब्रह्मपदादिकमिति" ज्ञात्वैव प्रभुनापि तस्मै तस्मै तत्तदभ धिकारो दत्तः। नाप्रेमदोऽपि प्रेमद इत्येतद्धर्म्मस्य प्रोज्झितकैत तबत्वात्। अतएव त्रिकपटी बर्जितः यथा धनकपटी, बलकपटी, प्रेमकपटी च इति। यस्तु श्रुतश्रीभागवतधर्म्मः गुरुकृष्णवैष्णव सेवने श्रीभागवतप्रीत्यै तद्व्ययपराङ्मुखः प्रत्युततद्विपरीतव्यव हारवर्त्मनि सहस्राधिकादिव्ययनिरतोऽधिकतल्लाभाय पूर्वत्र शतादि दानेऽपि भीतः स आद्यः। यस्तु सत्यामपि शक्तौ कृष्णवैष्णवक र्म्मणि जडः श्रीचैतन्यसंकीर्त्तनताण्डबादयलसः स द्वितीयः। यस्तु प्रेम्नि अजातेऽपि उत्कण्ठारहितः अहं भक्त इति साभिमानः स तृतीयः। एतेषां कापट्यत्यागेन मुहुर्म्मुहुर्म्महत्कृपासापेक्ष्यं

सम। ननु अयं नन्दनन्दनस्तदा सर्व्वश्रुतिपुराणप्रसिद्धश्याम-
रूपमेवास्य स्यादत आह। पुरटद्युतिकदम्बसन्दीपितः पुरटात्
जाम्बुनदादिसुवर्णात् सुन्दरी या द्युतिस्तत् समूहेन कान्ति-
पुञ्जेन सन्दीपितः आच्छादित-चिक्कणमरकतमणिकान्तिक इति
भावः। अतएव हरिः त्रिजगन्मोहनः "अनर्पितचरीं चिरात्"।
कृष्णरूपेण पुनः कृष्णमोहिनीरूपसम्वलितत्वात। ततोऽस्य दर्शने
चिन्तने एव प्रेमोदयः न पुन दीनादानापेक्षा, हरति सर्व्वं प्रेम्णा
इति भावः। नन्वस्य लीलां भावयामि कृपया ब्रूहीत्यत आह
स्फुरतु वः भोः त्वमद्यापि प्रधानगिरिरिब, यतः श्रीगौरांगचन्द्र-
लीलापि ते न गोचरा अतः सत्यपि ज्ञाने तव हृदयं शैलकन्दरमेब,
तत्र कृपया प्रभुर्मे दीनदयामयः स्फुरतु सर्व्वदा तदा तल्लीलापि
प्रेममयी सर्वदा स्फुरिष्यतीति प्रत्यक्षीकरिष्यस्येव किं कथनेन।
कथनेऽपि ते बिलतुल्यकर्णौ किं ज्ञातुं शक्नुत इति भावः।
ननु महापराधी अहं हा श्रीचैतन्यलीलायामपि न मे रतिर्जाता
कथं स मामनुग्रहिष्यति इत्यत आहश्रीशचीनन्दनः। जगन्माता शची
तस्या बालकेषु स्नेहो वर्त्तत एब "कुपुत्रो जायते कचिदपि कुमाता
न भबति" इति न्यायेन मातृभक्तो गौराङ्गस्त्वामनुग्रहिष्यत्येवेति
भावः। यद्वा एवं महानुभावमतप्रसिद्धिर्वर्त्तते संन्यासानन्तर—
मद्वैतगृहे शचीगौराङ्गसंबादः। यथा शची आह-रे विश्वम्भर!
बिश्वरूपशोकादि ज्ञातं, मदीयजन्मान्तरीयपापपुञ्जः स्थित एव
कालेन फलितः। यदि भवत पितृवन्मन्मृतिरद्यापि सहसा
सभम्वति तदैहिकशोकसन्तापलोकधिक्कारलज्जादिभ्यो मुक्ता
स्याममुत्र यद्भवतु। यदि जीबनं नश्येत्तदा मया किं बिषादि पातव्यं
किं सुरधुनीनीरमध्यमध्यासनीयमन्यथा बिश्वम्भरजननीति सर्व्वैः
श्लाघ्या स्थिताहमतीब तिरस्कृता स्यां। न कोऽपि मया संबदिष्यति
न वा मन्नाम ग्रहीष्यति अहो अस्याः नामग्रहणेन करगतेष्टमपि
नंक्ष्यति अतीब दुर्भागिनीमेनामस्मात् पुरान्निःसारय इति

परस्परप्रबदशीलो नबद्वीपलोको भविष्यति। किमतः कार्य्यं ममेति ब्रूहि बिश्वम्भर ! ततः श्रीगौराङ्गेनोक्तम्–

"मातर्म्मा बद मा बदेद्दशमहो कष्टातिकष्टं बच
स्तथ्यं ते निगदामि यामि भवनात्तिष्ठामि यद्यन्यतः।
त्वं माता मम सर्वदेशबसतौ देबादिजन्मस्वपि
त्वत्पुत्रोऽहमहं सदा त्रिजगतामर्च्च्यस्त्वमर्च्च्या मम"इति।
"सर्वसाधनहीनोऽपि महापापसहस्रकृत्।
शचीसुत इति प्रोक्तः सगणं मां बशं नयेत्॥
स ज्ञानी सर्व्वशास्त्रज्ञः स प्रेमी मत्प्रियोऽधिकः।
शचीनन्दन इत्येव येन हर्षेण गीयते॥
मां क्रीणाति जनो धन्यः परिक्रीणाति मद्गणं।
शचीनन्दन इत्येवं योऽभिधत्ते कथञ्चन॥
तस्य बिद्या तस्य वित्तं स तीर्थसदृशो भवेत्।
शचीनन्दन इत्येबं येन हर्षेण गीयते॥
शचीं वा मां शचीपुत्रं नवद्वीपं शचीस्थलं।
यो बदेत् सोऽवदच्छास्त्रं वेदवेदान्तसंग्रहम्॥
जन्म जन्मनि तत्प्रीतो जातोऽहं यो बदेत् क्वचित्।
श्रीशचीति श्रीशचीति श्रीशचीति स मे गुरुः"॥

इत्यतः श्रीशचीनामग्रहणेन महापराधिनोऽपि श्रीगौराङ्गोऽतिप्रियो भवतीत्युक्तं श्रीशचीनन्दन इति। तथा च श्रीशचीनन्दन इत्येवं कीर्त्तय तेनैब कीर्त्तनेनापराधयुक्तोऽपि तस्मान्मुक्तो भबिष्यसीति॥

इति श्रीश्रीपादजीबगोस्वामिबिरचिता
अनर्पितचरीमिति श्लोकस्य ब्याख्या

—:०:—